श्रीवैष्णवसिद्धान्त ग्रन्थरत्नमाला

द्वितीयं रत्नम्

# तत्त्वटीका

श्रीभगवद्रामानुजविरचितश्रीभाष्यस्य व्याख्या

कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र

श्रीनिगमान्तमहादेशिकैः

अनुगृहीता

परमहंस परिव्राजकाचार्य श्रीवण् शठकोप

श्रीरङ्गशठकोपयतीन्द्रमहादेशिकैः

परिशोधिता

तदीय भूमिकया च सहिता

श्रीवैष्णवसिद्धान्त प्रचार सभाध्यक्षैः

प्रकाशिता

मद्रास्

1938

॥ श्री ॥

# विषयानुक्रमः

॥ श्री ॥

# प्रमाणाकरसूचिकायामुपयुक्ताना प्रमाणग्रन्थतत्तत्प्रकरण सङ्केताक्षराणा विवरणम् ।

---

अथ शि उ - अथर्वशिखोपनिषत्

अथ शिर - अथर्वशिर उपनिषत्

अभा वा - अभाववाद

अ रा ना - अनर्घराघव नाटकम्

अष्टा - अष्टाध्यायी

अहि स - अहिर्बुध्न्यसहिता

आथ श्रु आथर्वणी श्रुति

आग प्रा - आगमप्रामाण्यम्

आ ब्रा - आर्षेय ब्राह्मणम्

आप ध सू - आपस्तम्बधर्मसूत्रम्

आप. श्रौ प सू - आपस्तम्ब श्रौतपरिभाषा-सूत्रम्

आप श्रौ सू - आपस्तम्बश्रौतसूत्रम्

इति स - इतिहाससमुच्चय

इ सि - इष्टसिद्धि

ई उ - ईशावास्योपनिषत्

ऐ आ - ऐतरेयारण्यकम्

ऐ उ - ऐतरेयोपनिषत्

कठ उ कठोपनिषत्

का पा - काण्व पाठ

काठ काठकम्

कौषी उ - कौषीतक्युपनिषत्

ख ख खा - खण्डनखण्डखाद्यम्

गारु पु गारुडपुराणम्

गी भा - गीताभाष्यम्

गौ ध सू गौतमधर्मसूत्रम्

च श्लो - चतु श्लोकी

चो सू - चोदनासूत्रम्

छा उ - छान्दोग्योपनिषत्

ज स - जयाख्य सहिता

जि अ - जिज्ञासाधिकरणम्

जि स्तो - जित ते स्तोत्रम्

त टी पु - तत्त्वटीका पुटम्

त र तत्त्वरत्नाकर

त वा - तन्त्रवार्तिकम्

ता तू } - तात्पर्यतूलिका (श्रीभाष्यव्याख्या)
तू }

ता र तार्किकरक्षा

तै आर - तैत्तिरीयारण्यकम्

तै उ तैत्तिरीयोपनिषत्

तै ना उ - तैत्तिरीय नारायणोपनिषत्
तै ब्रा - तैत्तिरीय ब्राह्मणम्
तै स - तैत्तिरीय सहिता
तै उ भा वा - तैत्तिरीयोपनिषद्भाष्यवार्तिकम्
द स्मृ - दक्षस्मृति
द्र भा - द्रमिडभाष्यम्
धा पा - धातुपाठ
निरा - निरालम्बनवाद
ना लि - नामलिङ्गानु शासनम्
नै सि - नैष्कर्म्यसिद्धि
न्या कु - न्यायकुसुमाञ्जलि
न्याय त - } न्याय तत्त्वम्
न्या तत्त्व }
न्या वा ता टी - न्याय वार्तिक तात्पर्यटीका
न्या वा ता परि - न्यायवार्तिक तात्पर्यपरिशुद्धि
न्या सु - न्यायसुदर्शनम्
न्या सू - न्यायसूत्रम्
प पा वि - पचपादिकाविवरणम्
पु सू - पुरुष सूक्तम्
पू मी सू - पूर्वमीमासा सूत्रम्
प्रकृ ख - प्रकृति खण्ड
प्रति सू - प्रतिज्ञासूत्रम्
प्र सू - प्रत्यक्षसूत्रम्
प्र उ प्रश्नोपनिषत्
प्र पा भा - प्रशस्त पाद भाष्यम्
ब ब्रा - बहूवृचब्राह्मणम्
बृ टी - बृहट्टीका (शाबर भाष्यटीका)
बृ उ - बृहदारण्यकोपनिषत्
बृ सू - बृहस्पति सूत्रम्
बो गृ बोधायनगृह्यसूत्रम्
ब्र बि उ ब्रह्मबिन्दूपनिषत्
ब्र सू - ब्रह्मसूत्रम्
ब्र सू भा भा - ब्रह्म सूत्रभास्करभाष्यम
ब्र कै पु - ब्रह्मकैवर्तपुराणम्
भ गी - भगवद्गीता
भामती - शाकर भाष्यव्याख्या
भा स - भारद्वाजसहिता
भू का ब्रा अ=भूमिकाण्डे ब्राह्मणा याय
म भा - महाभाष्यम्
म भा प्रदी - महाभाष्यप्रदीप
म भार महाभारतम्
म श्लो - मङ्गलश्लोक
म सि - महासिद्धान्त
म स्मृ - मनुस्मृति
मु उ - मुण्डकोपनिषत्
या स्मृ याज्ञवल्क्यस्मृति
रह ब्रा - रहस्याम्नाय ब्राह्मणम्
वि ध विष्णुधर्म
वि पु - विष्णु पुराणम्
वि सह विष्णुसहस्रनाम
व स्मृ - वसिष्ठस्मृति
वा - वार्तिकम् (वैयाकरणानाम्)
वे स - वेदार्थसग्रह
वे सा - वेदान्तसार

वैज को  वैजयन्तीकोश
वै सू - वैशेषिकसूत्रम्
ल सि - लघुसिद्धान्त
लैङ्ग पु - लैङ्गपुराणम्
वा पु - वायुपुराणम्
व्या स्मृ - व्यासस्मृति
श ब्रा - शतपथब्राह्मणम्
श भा, शा भा } शाबरभाष्यम् (पूर्वमीमासासूत्राणाम्)
शा न्या क स - शारीरकन्यायकलापसग्रह
शङ्क भा, शाङ्क भा } शाकर ब्रह्मसूत्रभाष्यम्
शू वा - शून्यवाद
श्री भा - श्रीभाष्यम्
श्री भा वि - श्रीभाष्य विवरणम्
श्री रा  श्रीमद्रामायणम्
श्रु प्र - श्रुतप्रकाशिका
श्रु सू - श्रुतिसूक्तिमाला
श्लो वा - श्लोकवार्तिकम्
श्वे उ - श्वेताश्वतरोपनिषत्
षा वि - षाड्गुण्यविवेक
सनत्सु  सनत्सुजातीयम्
सङ्क का, स का } सकर्षकाण्ड
स परी=सशय परीक्षा
स्का पु - स्कान्दपुराणम्
स्फो वा - स्फोटवाद
सि. त्र  सिद्धित्रयम्

# टिप्पणीषु निर्दिष्टाना तत्त्वटीकाशोधनोपयुक्त-ग्रन्थसङ्केताक्षराणा विवरणम्

---

| | | |
|---|---|---|
| क = राजकीयप्राच्यलिखितपुस्तकागारस्थम्। | | ४ २ ९ इति अङ्कितम्। |
| ख = | ” | ऐ बि ३ ५ इत्यङ्कितम्। |
| ग = | ” | ८ ६. ११. इत्यङ्कितम्। |
| च = | ” | यन् ६. २. इत्यङ्कितम्। |

गो = गोष्ठीपुरम् श्रीरामदेशिकाचार्याणा तालपत्रात्मकम् पुस्तकम्।

घ = काचीपुरम् महामहोपाध्याय श्रीकृष्ण ताताचार्याणा पुस्तकालयादानीत तालपत्रात्मकम् पुस्तकम्

सु = काचीपुरे सुदर्शनमुद्राशालाया आन्ध्राक्षरैर्मुद्रितम् पुस्तकम्।

---

श्री
श्रीमते रामानुजाय नम
श्रीमते निगमान्तमहागुरवे नम

# तत्वटीकाभूमिका

वन्दे लक्ष्मीनरहरिमुग्र वीर ज्वलन्तमतिभद्रम् ।
यो रक्षक कमलया वेदान्ते गीयते च सिद्धान्ते ॥
जयति यतिराजभाष्य जयन्ति निगमान्तसूरिसद्ग्रन्थाः ।
तत्रापि तत्त्वटीका जयतितरा भाष्यसर्वभावदुघा ॥

भो भो ब्रह्मविद वयमेतत्तत्वटीकानुगृहीतॄणामाचार्यवर्याणा तत्वटीकायाश्च विषये यत्किंचिदुक्त्वा कृतार्थीभवितुमीहामहे ।

## आचार्याणां घण्टावतारत्वम् ।

विदितमेवेद प्रायश पण्डितवराणा पद्मासनेन प्रतिष्ठाप्य परिचारविधौ प्रयुक्ता वेङ्कटनाथस्य घण्टैव विबुधवैरिवरूधिनीवित्रासिनी श्रीनिवासनियमनेन स्वय लोकानुजिघृक्षया च काञ्च्या दीपप्रकाश-सन्निधिसमीपस्थे तूप्पुलग्रहारे विविधगुणशेवधेर्वैश्वामित्रानन्तसूरे पुत्रतया तोताराबातस्समवततारेति । उक्त चाचार्यपादैरेव सकल्पसूर्योदये कविप्रशसाप्रकारणे स्वेषा घंटावतारत्वम् ।

" वित्रासिनी विबुधवैरिवरूधिनीना पद्मासनेन परिचारविधौ प्रयुक्ता ।
उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घटा हरस्समजनिष्ट यदात्मनेति ॥" (अ १ श्लो १४) इति ।

भविष्योत्तरपुराण वेङ्कटाचलमाहात्म्ये चतुर्दशाध्याये भगवान् कमलासन श्रीनिवासाज्ञया तस्य पूजोत्स-वादिक विशेषतश्चकारेति प्रसिद्धिमनुरुध्यात्र घटाया पद्मासनप्रयुक्तत्वोक्ति । इत्थ शुद्धयाजित्वेन प्रसिद्धेन पद्मासनेन प्रयुक्तत्वोक्त्या घटाया केवलभगवद्विष्ठितत्व ज्ञाप्यते । स्वरूपकथनमात्रत्वे मन्द-प्रयोजनत्वात् । ब्रह्मणश्च शुद्धयाजित्व हस्तिगिरिमाहात्म्ये पचमाध्याये स्वेनैव स्वस्य देवतान्तरानाराव-

कत्वेन ख्याप्यते—"न यष्टव्या मया यूय कदाचिदपि देवता । अन्येनापि भवाबोधिं तर्तुकामेन केनचित्" इति । उत्प्रेक्ष्यत इति स्पष्टमनुमीयत इत्यर्थ । अत्र उदित्यनेनानुमितेर्निश्चयरूपत्वम् । प्र इत्युपसर्गेण प्रमात्व च द्योत्यते, वैशद्यातिशयद्योतनाय ईक्षतिप्रयोग । दृश्यते च सिषाधयिषया प्रत्यक्षदृष्टविषयानुमितौ क्वचित् प्रत्यक्षसमान वैशद्यम् । परोक्षज्ञाने च वैशद्यविवक्षया प्रत्यक्षबोधकधातुप्रयोगो दृश्यते 'तमस पार दर्शयति भगवान्सनत्कुमार' इति छान्दोग्ये । लोके च 'पारदर्शी' 'दूरदर्शी' इत्यादौ । अनुमित्याकार दर्शयति—**हरेर्घण्टा यदात्मना समजनिष्टेति ।** तिङन्तपदघटितोऽप्यनुमानप्रयोग 'प्रथिवी इतरेभ्यो भिद्यते' इत्यादौ दृष्ट । अत्र हरिघटाद्देशेन आचार्यरूपेण सजातत्व विधीयते । अत्र समीचीन हेतुमाह—**उपपत्तिभूम्नेति ।** नादेनासुरप्रकृतिबाह्यकुदृष्टिवित्रासकत्व, वादाहवेषु विचित्रतरतारशब्दावलीजनकत्व, भगवत्परिचर्यैकरतत्वादिक च अत्र **उपपत्ति**पदविवक्षिता । तथाचात्र प्रयोग —वेंकटेशघण्टा वेदान्तगुर्वात्मना जाता, स्ववृत्तिभूयोधर्मसदृशधर्मवद्वेदान्तगुरुकत्वात्, या स्ववृत्तिभूयोधर्मसदृशधर्मवद्यत्का सा तद्रूपेण सजाता, यथा घटरूपेण सजाता मृत् इति ।

> "वेदान्ताचार्यजननी वरपुत्राभिलाषिणी ।
> स्वप्ने श्रीवेङ्कटेशेन दत्ता घण्टा निगीर्य सा ॥
>
> दधार गर्भमतुल द्वादशाब्द पतिव्रता ।
> ततो जज्ञे गुरुरय वेदान्ताचार्यशेखर ॥" (सकल्प व्या अ १ श्लो १४)

इति प्राचीनप्रामाणिकतमसगृहीतावतारहेतुरहस्यादिक चात्रोपपत्तिभूमपदविवक्षितान् हेतूनुपोद्बलयति । उपपत्तीना भूमा बहुत्वम् । एतदनुमिते प्रमात्वदार्ढ्यापादकमनुमातृवैलक्षण्यमाह—**बुधजनै**रिति । **बुधे**त्यनेनानुमानस्य दुष्टत्वशङ्का निरस्यते । बहुवचनेन तदानान्तनबुधेषु न कस्याप्यस्मिन्विषये विप्रतिपत्तिरभूदिति ख्याप्यते । अत्र '**उत्प्रेक्ष्यते** उत्प्रेक्षा क्रियते । उत्प्रेक्षावाक्यमाह—**घटाहरेस्समजनिष्ट यदात्मनेति** । तथा चास्मिन्श्लोके आचार्यवर्याणा घटावतारत्वमुत्प्रेक्ष्यत इत्युच्यते । न वास्तवम्' इति व्याख्यान तु न युज्यते । हरेर्घण्टा यदात्मना समजनिष्टेति वाक्ये 'मन्ये शके ध्रुव प्रायो नूनमित्येवमादिभि । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश' ॥ इत्युक्तेषूत्प्रेक्षाव्यजकशब्देषु कस्याप्यभावात् । उत्प्रेक्षाशब्दश्च अन्यथासिद्ध । षोढा भिन्नासु स्वरूपहेतुफलोत्प्रेक्षासु न काचिदपि कथचिदप्यत्रोपपादयतु शक्या । न चेय हेतूत्प्रेक्षा । तद्वाक्ये हेतुवाचकपदाभावात् । उपपत्तिभूम्नेत्येत

## वात्स्यवरददेशिकानुग्रहः ।

एते च शैशव एव प्रज्ञाविशेषपरिभूषितान्तःकरणा पञ्चमे वयसि स्वमातुलैस्सह पण्डितप्रकाण्डपरिमण्डिता महनीयवात्स्यवरदाचार्याणां कालक्षेपगोष्ठीमलञ्चक्रुः । तत्सेवाकौतुकेन वात्स्यवरदाचार्याश्च विस्फुलिङ्गायमानानेतानुद्वीक्ष्य तदातनेन केनचिददसीयविचित्रव्यापारेणातिलोकमेतेषां मेधाविशेषवैभवमालक्ष्य च परितोषपरवशान्तःकरणाः परमकृपापरिपूर्णहृदयाश्च भूत्वा एतेषां परमाशीर्वादरूपं पद्यमिदमनुजगृहुः

" प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥ "

इति । श्रुत्वैतदात्रेयरामानुजाचार्या अपि मातुलाः स्यादयमेवमेवेत्यन्वगृह्णन् । आचार्यपादास्तु अनुग्रहमेनं परदेवतापारमार्थ्यवेदिपराशरब्रह्मर्षिलब्धपुलस्त्यवसिष्ठप्रत्तवरविशेषमिव मन्वाना सारावल्यां तत्त्वमुक्ताकलापे च

" श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां
सम्यग्दृष्टेन सर्वंसहनिशितधिया वेङ्कटेशेन क्लृप्त " (अधि सा १) इति

श्रुत्वा रामानुजार्यात्सदसदपि ततस्तत्त्वमुक्ताकलापं
व्यातानीद्वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा " (तत्त्वमु—१ २)

इति च सादरं सहफलं च स्वयमेव प्रकटयामासुः । अस्य च श्लोकस्य सौष्ठवं स्वविषये सम्पूर्णफलत्वं च दृष्ट्वा प्राचार्योक्तमपीमं सङ्कल्पसूर्योदये वादं प्रति गुर्वाशीर्वचनतया सादरं निबबन्धुराचार्याः (सङ्कल्प-२ १५)। इत्थं श्लोकसौष्ठवादिकम् दृष्ट्वा एकग्रन्थे स्वोक्तमपि ग्रन्थान्तरे, अन्योक्तमपि स्वग्रन्थे निबध्नन्ति महान्तोऽप्यन्ये। तथाहि वैकुण्ठगद्ये, स्तोत्ररत्ने प्राचार्योक्तमेव, " प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम् । शुचिस्मितं कोमलगण्डमुन्नसं " इति पादत्रयम् " उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम् । प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभि "॥ इति स्तोत्ररत्नश्लोकयोरर्धद्वयं च प्रबबन्धुः श्रीभाष्यकाराः । किं कारणमत्र विना श्लोकसौष्ठवदर्शनं भक्तिभारोद्गीर्णतद्विषयगौरवं च ? न ह्येते इतोऽपि रमणीयं वचनं स्वयं वक्तुमशक्ताः, अतः आचार्यैस्सङ्कल्पसूर्योदये निबन्धनमात्रेण नास्या

रदचार्यानुक्तत्वशकावकाश । अनन्तर च **वरदाचार्यास्स्वशिष्यगणवरिष्ठान् वादिहंसाम्बु-** रनामधेयान **आत्रेयरामानुचार्या**नाहूय 'भवानेवैतस्य प्रियभागिनेयस्य पराशर इव मैत्रेयस्य सक- कलास्वाचार्यधुरामुद्वहन्नेतन्मुखेन सर्वतोमुख रामानुजसिद्धान्तम् प्रकटीकरोत्वि'ति आज्ञापयामासु॥

## आचार्यवर्यलाभः ।

एते खलु **रामानुजाचार्या** यतीन्द्रमाहानसिकस्य वेदान्तोदयनत्वेन प्रसिद्धवैभवस्य **प्रणतार्ति- र्स्य पौत्रजाः** । उक्त चाचार्यपादैर्न्यासतिलके—" यो माहानसिको महान्यतिपतेर्नातिश्च तत्पौत्र- र्यान् " (श्लो ८) इति । **यतीन्द्रमाहानसिकाश्च श्रीभाष्यकार**सकाशादेव श्रीभाष्य ान्याय द्वादशवारमिति तच्छ्लोकव्याख्याने **कुमारवरदगुरवः** । ततश्च **वरदगुरु**नियमनेन तैश्शि- स्वीकृता गुरुचरणास्तत्पादावुपसगृह्य तेभ्य एव विंशत्यब्दे विशुश्रुवुर्विविधा विद्या । उक्त चेदमपि **पूर्योदये** " विंशत्यब्दे विश्रुतनानाविधविद्य , " (श्लो १५) इति ।

## हयग्रीवसाक्षात्कारः

ततश्च तत एव गृहीत्वा वैवतेयमन्त्रम् अहीन्द्रक्षेत्रे औषधाचलोपर्यश्वत्थमूले पुरश्चर्यां कृत्वा त्र तत्प्रसन्नेन वेदात्मना विहगेश्वरेणोपदिष्ट हयग्रीवमन्त्रम् कृत्वा च यथाशास्त्रम् तत्पुरश्चर्यां ा ध्रुवादिवत् तत्साक्षात्कारम् तत्तेजोबृहितविचित्रशक्तयस्समभवन् । उक्त च **महाचार्यैः**— ्नतेजोबृहिताश्चर्यशक्ति " (शतदूषणीमङ्गलाचरणे) इति ।

## वेदान्ताचार्यादिविरुदावलीप्राप्तिः

नदनु च

" को वा चक्षुरुदचयेदपि पुरस्साटोपतर्कच्छटा-
शास्त्राशस्त्रिविहारसभृतरणास्वादेषु वादेषु न । " (यति स श्लो ६८)

था वादाहवेषु वादिभिर्दुर्निरीक्षा विजित्य तान्वादेषु, स्थापयित्वा च **सर्वार्थसिद्ध्यादिषु-** नम्, शातयित्वा **शतदूषण्यादौ** परमतम् , जडीकृत्य च कवितामार्गे **डिंडमकृष्णमिश्रादीन्** , च सद्भिस्सदसि दत्तम् **समस्यासहस्रित्वकविकथकमृगेन्द्र**तादिविरुद, समान्य च शिरसा

दचार्यानुक्तत्वशङ्कावकाश । अनन्तरं च **वरदाचार्यास्स्वशिष्यगणगरिष्ठान् गाडिसाम्बु**-नामधेयान् **आत्रेयरामानुचार्यानाहूय** 'भवानेवैतस्य प्रियभागिनेयस्य परमगुरु इव मंत्रयस्य सक-कलास्वाचार्यधुरामुद्वहन्नेतन्मुखेन सर्वतोमुखं रामानुजसिद्धान्तम् प्रकटीकरोतु' इति आज्ञापयामासु ॥

## आचार्यवर्यलाभः ।

एते खलु **रामानुजाचार्या** यतीन्द्रमाहानसिकस्य वेदान्तोदयनत्वेन प्रसिद्धस्यास्य **प्रणतार्ति-हरस्य पौत्रजाः** । उक्तं चाचार्यपादैर्न्यासतिलके—"यो माहानसिको महान्यतिपतेर्नौमिश्च तत्पौत्र-मार्यान्" (श्लो ८) इति । **यतीन्द्रमाहानसिकाश्च श्रीभाष्यकार**सकाशादेव **श्रीभाष्यं** व्याख्याय द्वादशवारमिति तच्छ्लोकव्याख्याने **कुमारवरदगुरवः** । ततश्च **वरदगुरु**नियमनेन **तैरिदा-**स्वीकृता गुरुचरणास्तत्पादावुपसगृह्य तेभ्य एव विंशत्यब्दे विशुश्रुवुर्विविधा विद्या । उक्तं चेदम**पि** **संकल्पसूर्योदये** "विंशत्यब्दे विश्रुतनानाविधविद्य," (श्लो १५) इति ।

## हयग्रीवसाक्षात्कार.

ततश्च तत एव गृहीत्वा वैनतेयमन्त्रम् अहीन्द्रक्षेत्रे औषधाचलोपर्यश्वत्थमूले पुरश्चर्यां **कृत्वा** । च तत्प्रसन्नेन वेदात्मना विहगेश्वरेणोपदिष्टं हयग्रीवमन्त्रम् कृत्वा च यथाशास्त्रम् तत्पुर**श्चर्यां** च अवादिवन् तत्साक्षात्कारम् तत्तेजोबृंहितविचित्रशक्तयस्समभवन् । उक्तं च **महाचार्यैः**——"...दननतेजोबृंहिताश्चर्यशक्ति" (शतदूषणीमङ्गलाचरणे) इति ।

## वेदान्ताचार्यादिविरुदावलीप्राप्तिः

तदनु च

> "को वा चक्षुरुदञ्चयेदपि पुरस्साटोपतर्कच्छटा
> शास्त्राशास्त्रिविहारसम्भृतरणास्वादेषु वादेषु न ।" (यति स श्लो ६८)

...गी या वादाहवेषु वादिभिर्दुर्निरीक्षा विजित्य तान्वादेषु, स्थापयित्वा च **सर्वार्थसिद्ध्यादिषु**-सिद्धान्तम्, शातयित्वा **शतदूषण्यादौ** परमतम्, जडीकृत्य च कवितामार्गे **डिण्डिमकृष्णमिश्रादीन्**, ...हृत्य च सद्भिस्सदसि दत्तम् **समस्यासहस्रित्वकविकथकमृगेन्द्रतादिबिरुद**, समान्य च **शिरसा**

कदाचित् **श्रीरगनाथकृतम्** "इत पर श्रीभाष्य शश्वदध्याप्य गुणपूर्णान् शिष्यगणान् रामानुजार्यदिव्याज्ञा दिगन्तव्यापिनीं कुरु" इत्येतादृश किमपि दिव्यशासनम् , निर्वर्त्य च तत्तथा प्रतिलभ्य च तत्सतुष्टहृदयेन तेन देवेन दत्ता अनितरजनलभ्या **वेदान्ताचार्य**सज्ञा, तत्सज्ञायास्सार्थकीकरणाय, साव-धानबहुज्ञपरितोषणाय च प्रणि'यु **श्रीमतीमधिकरणसारावलिम्**। स्पष्टमिद सर्वं **सारावल्याम्** प्रथमत

" स्वस्ति श्रीरगभर्तु किमपि दधदह शासन तत्प्रसत्त्यै
सत्यैकालवि भाष्य यतिपतिकथित शश्वदध्याप्य युक्तान् ।

विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्ताम्
वेदान्ताचार्यसज्ञामवहितबहुवित्सार्थम वर्थयामि " (अधि सा श्लो २) इति ॥

इत्थ शारीरकभाष्यार्थममृतझरीप्रायाभिस्स्रग्धराभिस्सारावल्या प्रथम सगृह्य तमेव विस्तरशो विवरीतुकामा-**स्तत्त्वटीका**मेनामनुजगृहु ।

## तत्त्वटीकावतारदेशः

एषा च **टीका** काञ्च्यामेवावतीर्णेति मन्यामहे तत्पुराधीशविषयमगळश्लोकालङ्कृतत्वात् । एते चाचार्या यत्र वसन्तो यद्ग्रन्थमारचयन्ति तत्क्षेत्राधीशविषयमेव मङ्गलपद्य तद्ग्रन्थादावारचयन्तीति च सुप्रसिद्धमेतत् । एतादृशी च टीका कर्तु **तत्त्वमुक्ताकलापा**वसाने ।

" निश्शेषा वस्तुवृत्ति निपुणमिह मया न्यस्यता क्वापि कोणे
यत्रोदासि द्विधा वा समगणि गहने सम्मते सन्मतीनाम् ।

निष्कष्टु कश्चिदन्य प्रभुरिति भगवल्लक्ष्मणाचार्यमुद्रा-
मक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्त ॥" (अद्रव्यसरे श्लो १३५)

इति वदद्भ्य एतेभ्य कोऽन्य प्रभवेत् ।

## तत्त्वटीकायाः शारीरकशरीरप्रकाशनैदम्पर्यम्

एषा च **तत्त्वटीका** आचार्यहृदयानुगुणा समजनि । यद्यप्याचार्यपादानामेव शतदूषण्यादयो बहव ग्रन्थवरा प्रज्वलन्तितमा लोके, तथापि तेऽन्यपरा न साक्षाच्छारीरकभाष्याक्षरपदवाक्यानामखिलाना

परिच्छिन्नगहनगभीरभावप्रकाशनैदंपर्यप्रवृत्ता इति नैतत्तुलामधिरोढुमीशते । एतदभिप्रायेणैवोक्तमस्माभिरन्यत्र "तत्रापि तत्त्वटीका जयतितरां भाष्यसर्वभावसर्वंदुघा" इति । सूचितं च तत्त्वटीकायाः शतदूषण्यादीनामान्यपर्यादवरत्वमस्याश्च शारीरकशरीरस्यैव स्फुटतमप्रकाशनैदंपर्यप्रवृत्ततया सर्वोत्तरत्वं च "शातितश्शतदूषण्या शङ्करादिमुधाग्रहः । शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते" (तत्त्व टी श्लो ५) इति । शङ्करादीत्यादिना यादवभास्करपरिग्रहः । आनन्दतीर्थस्यापि परिग्रह इति केचिदाचक्षते, वदन्ति च प्राचीनकथां काञ्चिदेताम् । शतदूषण्यामुपरि चतुस्त्रिंशद्वादा मध्वमतखण्डनरूपा आसन्, एतदाज्ञाय कश्चिन्मध्वयतिः श्रीदेशिकचरणसन्निधौ भिक्षां याचमानः तानपश्यांश्चक्रे वादान् तत्समये । दत्ताश्च ते करुणामयैः केवलद्वैतपक्षपातिभिराचार्यैरिति । अन्ये त्वाहुरन्ते ।

"प्राचीमुपेत्य पदवीं यतिराजदृष्टां तत्सन्निकृष्टमपि वा मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शुकवत्पठन्तः प्रच्छन्नबौद्धविजये परितो यतन्ताम्"

(शतदूषणी वाद १ श्लो ३.)

इति शतदूषणीसूक्तिपर्यालोचनायां सर्वापि शतदूषणी शङ्करादिमतदूषणायैव प्रवृत्ता, न तु रामानुजमतसन्निकृष्टत्वेनाभिहितस्य मध्वमतस्य दूषणायापि । यतिलिंगभेदनिरासवादालेपकवादादयः शङ्करादिमतखण्डनायैव प्रवृत्ता अर्थान्मध्वमताचारखण्डनेऽपि पर्यवस्यन्तीति न तदैदंपर्या । परंतु उपरि चतुस्त्रिंशद्वादा दौर्भाग्यशालिनां छात्राणामनवधानेन नष्टाः स्युरिति । न वयमेतन्निश्चेतुमलम् । अत्रैवमेव स्यादिति । शारीरकशरीरं त्विति तुरेवकारार्थः । अनेन टीकायां आन्यपर्याभावस्सूचितः । व्यक्तमिति । अत्रापि तुकारस्यानुषङ्गः । न हि तत्त्वटीकादर्शनानन्तरं शारीरके एकमप्यक्षरमनवगतार्थं भवेदिति भावः । अत्रेति—अत्रापि तदनुषङ्गः । अनेन न ह्यन्यत्र कुत्राप्येव भाष्यार्थो विशदं प्रदर्श्यत इति ख्याप्यते । प्र इत्युपसर्गेण दर्शने स्वीययावत्सामर्थ्यप्रयुक्तत्वं व्यज्यते । इत्थं "त्रय्यन्तसूत्रभाष्यार्थतत्त्वटीका विधीयते" इत्येतन्नामकरणपद्यमप्येतस्या वैलक्षण्यं ज्ञापयति । तथाहि अत्र त्रय्यन्तविषयाणि यानि ब्रह्मसूत्राणि तेषां यद्भाष्यं तस्य योऽर्थः तस्य यत्तत्त्वं याथार्थ्यं तत्प्रकाशिका टीकेत्यर्थः । अथवा भाष्यस्य योऽर्थः तस्य या तत्त्वभूता टीका सा विधीयत इति योजना । एतेन टीकायास्साक्षाद्विषयः श्रीभाष्यम् तस्य विषयास्सूत्राणि तेषां विषयास्त्रय्यन्ता इति विषयविवेकः प्रदर्श्यते । तेन च टीकायास्साक्षात्परंपरया च त्रय्यन्तादित्रिक-

तत्वार्थप्रकाशकत्वकृतो ग्रन्थान्तरेभ्य उत्कर्ष प्रकटीकृतो भवति । **टीकाशब्दश्च** व्याख्याने रूढ । तस्य मूलपदसमभिव्याहारे स्वार्थप्रकाशकत्व षष्ठ्यर्थ । तथा च भारतटीकेत्यत्र भारतार्थप्रकाशिका टीकेति बोध । मूलार्थपदसमभिव्याहारे केवलप्रकाशकत्व षष्ठ्यर्थ । तथा च प्रकृते भाष्यार्थटी-केत्यत्र भाष्यार्थप्रकाशिका टीकेति बोध , या मूलार्थस्य याथार्थ्यम् मूलाभिप्रेतयावदर्थं च प्रकाशयति सा **तत्वटीकानाम**भाग्भवति, यथेय टीका , अतथाविधा चातत्वटीका । उक्त च भोजराजेन टीकाकृन्नि-न्दाव्याजेनातत्वटीकालक्षणम् योगपातजलसूत्रवृत्तौ ।

" दुर्बोध यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभि
स्पष्टार्थेष्वपि विस्तृति विदधति व्यर्थैस्समासादिकै ।

अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रम तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतस्सर्वोऽपि टीकाकृत " ॥

इति । तादृशदोषशून्यत्वादप्येषा **तत्त्वटीका** ।

## तत्त्वटीका श्रीभाष्यस्याष्टाविंशे प्रवचने प्रणीता

इय च सम्यङ्निर्णीय श्रीभाष्यसारमध्ययनभावनाभ्या, सम्यगध्याप्य च सप्तविंशतिकृत्वस्स-व्याख्य श्रीभाष्य सगुणान् शिष्यगणान् , स्थिरीकृत्य च मनसि सकलपूर्वाचार्यश्रीसूक्तिभाव, प्रवचनविधा-वष्टाविंशे प्रणीततया प्राजनि श्रीभाष्यजयध्वजपट्टिकेति हयवदनकल्पैराचार्यैरेवाभिनन्द्यते—

" निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणी
निपुणमनसामाशासौधस्थलीषु निबध्यते ।

यतिपतिभुवो भाष्यस्यासौ यथाश्रुतिचिन्तित-
प्रवचनविधावष्टाविंशे जयध्वजपट्टिका ॥ (त टी श्लो ७) इति ।

**निखिलेत्यस्य** चूडापदार्थेऽन्वय , अनेन च भेदाभेदघटकश्रुत्यादयो विवक्षिता । **परिष्कृतिरूपिणीति** तासा परिष्कृत्यभिन्न यद्रूप स्वरूप तद्वतीत्यर्थ । परिष्कृति परिष्कार । वेदान्ताना परिष्कारो नाम परस्पराविरोधेन निष्कृष्टार्थवर्णनम् । व्यवहरन्ति चाव्याप्त्यादिदोषरहितनिष्कृष्टलक्षणनिर्वचन परिष्कार-

शब्देन तान्त्रिका। यद्यपीय टीका भाष्यस्य, तथापि त्रय्यन्तानामैककण्ठ्यसूचकानि सूत्राणि, तेषामाजस्येन तात्पर्यवर्णनपर श्रीभाष्यम् तत्राशङ्क्यमानसर्वदोषनिरासपूर्वक तदर्थमिय निष्कृष्ट निर्वक्तीतीयमेव निगम-श्रेणीचूडापरिष्कृतिरूपा सजाता। यद्यपि परिष्कृतिरूपेत्येवालम् तथाप्यतिशायनविवक्षया कर्म-धारयादिनिप्रयोग। नित्ययोगविवक्षया कृष्णसर्पवान् वल्मीक इति प्रयोगवत्। **निपुणमनसामिति**। कृते इति शेष। आशासौधस्थलीष्वित्यनेन टीकायास्सर्वदिगन्तव्यापित्व द्योत्यते, **भाष्यस्ये**त्यस्य प्रवचनाविधावित्यनेनान्वय। **यथाश्रुती**त्यादि। श्रुति श्रवणम्। तदनतिक्रम्य चिन्तितस्य प्रवचनविधा-वित्यर्थ। अत्र श्रवणानतिक्रमोक्त्या प्रवचनविषयार्थाना साम्प्रदायिकत्व, स्वस्य च सम्प्रदायानतिलङ्घित्व च द्योत्यते श्रुत्यनतिक्रमश्च स्फुरति। यथाश्रुतचिन्तितेति पाठे श्रुतार्थानतिक्रमणमन्तत श्रवणानतिक्रमे पर्यवस्यति श्रुत्यनतिक्रमप्रतीतिश्च न लभ्यत इति, यथाश्रुति इति पाठ एव सरस। **अष्टाविंश** इति। अनेन टीकेय सकल्पसूर्योदयात्पूर्वं निर्मितेत्यवगम्यते। तत्र कविप्रशसावसरे " **विंशत्यब्दे विश्रुतनानाविध-विद्यस्त्रिंशद्वारं श्रावितशारीरकभाष्य:** " इत्युक्त्या सकल्पसूर्योदयस्य शारीरकभाष्यत्रिशद्वारश्रावणोत्तरत्व-प्रतीते। **जयध्वजपट्टिकेति**। भाष्यस्येत्यस्यात्राप्यनुषग, भाष्यार्थप्रकाशनेन स्वै क्रियमाणस्यापि जयस्य भाष्यकर्तृकत्वोपचार। स्वप्रचारमात्रेण प्रतिकथकसिद्धान्तस्तोमतूलपलायनहेतुतया जयध्वजपट्टिकात्वेन रूपकातिशयोक्ति। सारशास्त्रे चाचार्यैरेवातिशयोक्तिप्रयोजकधर्मेण सह पूर्वाचार्यग्रन्थाना रूपकातिशयोक्ति प्रदर्शिता "दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका" इति।

## तत्त्वटीका शाबरभाष्यवार्तिकात् श्रीभाष्यव्याख्यानान्तरतोऽपि च विलक्षणा

अस्या च **तत्त्वटीकायां** पूर्वमीमासाभाष्यवार्तिकाद्यतिशायिनी, श्रीभाष्यव्याख्यानान्तरातिशायिनी च, निरूपणचातुरी पदेपदे प्रादर्शि। तत्र काचित् स्थालीपुलाकन्यायेन प्रदर्श्यते टीकाया महिष्ठत्व-व्यक्त्यै, अगतार्थत्वाभिव्यक्त्यै च। तत्र य कश्चिदतिवाद इव भायात् सोऽपि 'न हि निन्दा' नयज्ञै नेरूपणरसज्ञैर्मर्षणीय। आचार्या खलु आदित एव टीकाया " अखिलेत्यादि भाष्यस्य दशार्थानभि-धमहे " (त टी श्लो ८) इति दशार्थाभिधान प्रतिज्ञाय " विषयादित्रिकस्योक्ति प्रथम प्रति-पाद्यते " (त टी श्लो ८) इति विषयादित्रिकरूप प्रथमार्थमुक्त्वा, " विषयादिप्रधानत्वमाद्यपद्ये समी-तम्। अधुना मङ्गलाचारप्राधान्यमनुवर्ण्यते "—(त टी श्लो २०) इति मङ्गलाचारस्य द्वितीयार्थत्वम् ।।द्यद्वितीययोरर्थयो प्राधान्य च प्रकटीकृत्य

"तत्रादिमचतुष्पाद्यामष्टार्थानपरान्विदुः ।
विशिष्टमङ्गलाचारप्रक्रियानान्तरीयकान् ॥

व्याख्यानमाद्यसूत्रस्य ब्रह्मलक्षणसंग्रहः ।
चतुरध्याय्यनुक्रान्तिर्ध्येयसंशोधनं द्विधा ॥

परपक्षप्रतिक्षेपः परारम्भनिवारणम् ।
स्वेष्टारम्भविरुद्धानां निश्शेषोद्धार इत्यपि ॥" (त टी श्लो ३५—३७)

इत्यन्तेन विषयादित्रिकविशिष्टमङ्गलाचाररूपप्रधानार्थनान्तरीयकानप्रधानानष्टार्थान् संगृह्य उपरि तान्विस्तरशो विवेचयामासु । अनया च टीकारम्भसंरम्भवैखर्या विज्ञायते आचार्याणामाशय, विरच्यमानया टीकया वार्तिकाद्वरिष्ठया भवितव्य'मिति । वार्तिके खलु "लोके येष्वर्थेषु प्रसिद्धानि यानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्ववगन्तव्यानि, नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा, एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते, इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत। तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । न चेह किंचिद्वृत्तमुपलभ्यते, भवितव्यं तु तेन यस्मिन्सत्यनन्तरं धर्मजिज्ञासाऽवकल्पते, तथाहि यः प्रसिद्धपदार्थकः स कल्पितो भवति" इति शाबरभाष्यादिमवाक्यस्य "सर्वंव्याख्यामुपालम्भं प्रत्याख्यानं तथापरे। परिसंख्यास्तुती केचिदथशब्दस्य दूषणम् ॥" (श्लो वा श्लो २७) इति षडर्थान्संगृह्य उपरितान्विस्तारयामासुर्वार्तिककारा । अनयोश्च टीकावार्तिकयोस्तरतमभावं विष्फारितनयना विलोकयन्तु विवेचनचतुरा विद्वांसष्टीकासूक्तिभिरेव विख्याप्यमानम् । तत्र वार्तिके षडर्थप्रकाशनादप्यधिकार्थप्रकाशनकृतोत्कर्षं टीकाया "दशार्थानभिदध्महे" (त टी श्लो ८) इत्यनया श्रीसूक्त्या स्पष्टीकृतं । लोके व्याख्यातृभिर्मूले शब्दत प्रतीयमानं प्रधानभूतं चार्थं प्रथमं प्रकटीकृत्य सति संभवेऽनन्तरमार्थोऽप्रधानश्चार्थः प्रकटीकार्य इति मर्यादा। तामादृत्य प्रथमं प्रधानार्थौ पश्चादप्रधानार्थोश्च संगृह्य विविच्य प्रकाशयन्तीभि "विषयादिप्रधानत्वमाद्यपद्ये समीरितम् । अधुना मंगलाचारप्राधान्यमनुवर्ण्यते। (त टी श्लो २०) अष्टार्थानपरान्विदु, विशिष्टमङ्गलाचारप्रक्रियानान्तरीयकान्" (तत्त्व श्लो ३६) इत्यादि श्रीसूक्तिभिश्च, तथाविधसंग्रहणविवेचनाभावकृता न्यूनता विख्यापिता वार्तिकस्य । न हि वयं विजानीमो वार्तिककाराष्षट्स्वप्यर्थेषु कं वा प्रधानं मन्वत इति। न च प्रथमतो निर्देशात्सर्वव्याख्यारूपार्थस्यैव प्राधान्यं तदभिप्रेतमिति शङ्क्यम्, "फल्गुत्वाच्चापि पूर्वयो"। (श्लो वा) इति वार्तिक एव प्रथमद्वितीययो

फल्गुत्वाभिधानात्। वस्तुतस्तु प्रथमं फल्गुतम इति वक्तव्यं। प्रायश व्याख्याप्रक्रियोपदेशपरे वाक्ये व्याख्यारूपत्वोपचारात् न हि येन केनचित् कंचित्प्रति, 'रघुवंशे सुप्रसिद्धार्थान्येव पदानि। अत प्रायशो लक्षणाध्याहारादिकं विना अर्थं प्रदर्श्यान्वयमुक्त्वा तात्पर्यमुपवर्ण्य स व्याख्येयस्त्वया' इत्युक्ते, इदमेव वाक्य रघुवंशव्याख्यानम् एतदुक्त्या च तद्व्याख्याता भवितुमर्हति। 'लोक' इत्यादिभाष्यसंदर्भश्च तादृश एवोपलभ्यते। दर्शितश्चैतदर्थस्योपचारिकत्वं तत्त्वटीकायाम्, "**सम्यग्व्याख्यानप्रक्रियायास्संग्रहेणोपवर्णनात् सर्वव्याख्या**" (त टी पु १०) इति। किं च टीकाया "दशार्थानभिदध्महे" इत्युत्तमपुरुषप्रयोगाद्वार्तिकश्लोके तदप्रयोगकृतान्यूनता व्यञ्जिता, तत्प्रयोगाद्धि दशानामप्यर्थानामाचार्याभिमतत्वं व्यज्यते। अतश्च छात्राणा सर्वेष्वप्यर्थेष्वादरो जायते। वार्तिके च 'संप्रचक्षते' इति प्रथमपुरुषप्रयोगेण स्वाभिमतत्वानभिव्यञ्जनात् सर्वेष्वप्यर्थेषु छात्राणा शुश्रूषा मन्दैव स्यात्। न च वार्तिके उत्तमपुरुषाप्रयोगेण स्वाभिमतत्वाव्यञ्जनमात्रम्। उत्तरत्र तेषा प्रायशोऽनभिमतत्वज्ञापनादपि। तथाहि वार्तिके "षडर्थान्संप्रचक्षते" इति प्रथममभिधाय "अस्य दृष्टविरुद्धत्वात् फल्गुत्वाच्चापि पूर्वयो। मध्यमे चातिदौर्जन्यात्" (श्लो वा) इति प्रथमद्वितीयतृतीयपक्षाणा स्वानभिमतत्वं स्वयमुक्तम्। चतुर्थस्तु त्रिदोषीग्रस्त। पञ्चमश्च तन्त्ररत्ने "उपयोगमान्द्यात्स्तुतिपक्षनामदृत्य सप्रत्ययशब्ददूषणपक्षं परिगृह्णातीत्यवतारिकावाक्येन वार्तिककारानभिमतो दर्शित। षष्ठस्तु 'लोक' इत्यादिवाक्यमात्रालभ्य। न हि टीकाया दशस्वर्थेषु कुत्रचिदप्याचार्यानभिमतिर्व्यज्यते। न च "अष्टार्थानपरान्विदु" इति" प्रथमपुरुषप्रयोगात्तेषु तदनभिमतिश्शङ्क्या॥ "दशार्थानभिदध्महे" इति दशसु स्वाभिमतिं प्रथमं प्रकटीकृत्य "नान्तरीयकानपरान्विदु"रिति तेषा नान्तरीयकतया पूर्वाचार्याभिमतत्वस्यैव प्रकाशनात्। किंच "विषयादिप्रधानत्वमाद्यपद्ये, तत्रादिमचतुष्पाद्या" इति पदैकवाक्यतापन्ने एकस्मिन्नेव श्लोके दशार्थाभिधानात्तया "लोक" इत्यादि, कल्पितो भवतीत्यन्ते अवान्तरबहुवाक्यघटिते षडर्थाभिधान नाश्चर्यावहमिति सूच्यते। उक्त च तन्त्ररत्ने "अत्र पचसु पक्षेषु यत्नगौरवपर्यन्तं पृथग्वाक्यम्। तत्र 'लोक' इत्यादि तु वाक्यान्तरम् 'अथ' शब्ददूषणार्थमिति वाक्यद्वयस्यैव षडर्थप्रतिपादकत्वम्। यदि द्वयो वाक्यैकवाक्यता सपाद्य एकस्यैव षडर्थपरत्वं निरुह्येत, तर्हि वेदाध्ययनमित्यादिसमाधानवाक्येनाप्येकवाक्यता सपाद्य सप्तार्थान् संप्रचक्षत इति सप्ताप्यर्था प्रदर्श्येन्ताम्। अलं संख्यासंकोचेन, एवमुपर्यपि। इत्थं च एकस्मिन्वाक्ये बह्वर्थप्रदर्शनकृतं वार्तिककारचातुर्यम् न सुष्ठु प्रतिष्ठितमिव पश्याम। तिष्ठत्वेतत्।

## टीकावार्तिकयोर्वैषम्यसंग्रहः ।

| टीकायाम् | | वार्तिके | |
|---|---|---|---|
| १ | प्रथमश्लोके दशार्थाभिधानम् । | १ | लोक इति प्रथमवाक्ये षडर्थाभिधान । |
| २ | तत्र प्रधानाप्रधानार्थाना विविच्य कथन, प्रधानार्थकथन प्रथमत , पश्चादप्रधानार्थकथन च । | २ | प्रधानाप्रधानविभागाकथनम् । कुत्रचिदपि प्राधान्ये तात्पर्यानभिव्यक्तिश्च । |
| ३ | उत्तमपुरुषप्रयोगेण दशाना स्वाभिमतत्वव्य ञ्जनम् । | ३ | प्रथमपुरुषप्रयोगात् षट्स्वर्थेषु स्वाभिमतत्वाऽव्यञ्जनम् । |
| ४ | दशस्वर्थेषु कस्यचिदपि दूषणाकथनम् । | ४ | षट्सु प्रायशोऽस्वारस्याभिव्यञ्जनम् । |
| ५ | पदैकवाक्यतापन्ने प्रथमपद्ये दशार्थकथनम् | ५ | अवान्तरबहुवाक्यघटिते वाक्यैकवाक्यतापन्ने प्रथमवाक्यद्वय षडर्थाभिधानम् । |

## टीकायाः शाबरभाष्यतो वैलक्षण्यम् ।

अस्ति हि पूर्वमीमासानवमाद्यपादे, "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् । आर्थपत्याच्च । ततश्च तेन सबन्ध । अपिवा शब्दपूर्वत्वाद्यज्ञकर्म प्रधान स्याद्गुणत्वे देवताश्रु ति । अतिथौ तत्प्रधानत्वमभाव कर्मणि स्यात्तस्य [1]प्रीतिप्रधानत्वात्" (पू मी सू अ ९ १ ६–२०) इति देवताधिकरणपञ्चसूत्री । सा च टीकायामपि व्याख्याता । तत्र टीकायाश्शबरभाष्यात्प्रमाणानतिलङ्घितकृत वैल क्षण्य प्रदर्शयाम । देवताधिकरणपूर्वाधिकरण "फलदेवतयो"रिति सूत्रेण फलस्य देवतायाश्च तत्तत्स बद्धधर्मप्रयोजकत्वमाशङ्क्य "न चोदनातो हि ताद्गुण्यात्" इति सूत्रेण धर्माणा स्वर्गाग्न्यादिप्रयुक्तत्व निषिध्यापूर्वप्रयुक्तत्व स्थापितम् । अत्र च देवताप्रयुक्तत्वाभावो न शक्यते वक्तुम् । देव तायास्सम्प्रदानतया प्रधानत्वात् । सम्प्रदान हि नाम कर्मणोऽपीप्सिततमादभिप्रेततरम् । तस्माद्यथा आतिथ्यमतिथिप्रयुक्त तथा धर्मा अपि सम्प्रदानभूतदेवताप्रयुक्ता इति पूर्वपक्षीकृत्य देवताया यज्यर्थतया गुणत्वेन न तत्प्रयुक्तत्वम् धर्माणामिति सिद्धान्तितम् । तत्र पूर्वपक्षत्रिसूत्र्यर्थ-

१ तस्य प्रतिविधानत्वात् इति टीकाया पाठ ।

वर्णने टीकायाश्शबरभाष्यस्य च नातिव्यत्यासो दृश्यते । विग्रहहविरादानप्रीतिफलप्रदत्वादयोऽपि स्मृत्युपचारान्यार्थदर्शनहेतुभिरेवोभयत्र स्थापिता पूर्वपक्षे । "अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधान स्यात् गुणत्वे देवताश्रुति" इति सिद्धान्तसूत्रस्य शाबरभाष्ये हि "अपिवा इति पक्षो व्यावर्तते । न चैतदस्ति यदुक्त देवता प्रयोजिकेति । यज्ञकर्म प्रधान स्यात् यजतेर्जातमपूर्वम् । कुत ? शब्दपूर्वत्वात् । यद्धि फल ददाति तत्प्रयोजकम् । इद फल ददातीत्येतत् ज्ञान शब्दपूर्वक, न प्रत्यक्षादिभिरवगम्यते । शब्दश्च यजतिवाच्यात्फलमाह, न देवताया" इत्यादिना । "ननु द्रव्यदेवताक्रिय यजत्यर्थ । सत्यमेव किन्तु गुणत्वे देवताश्रुति, द्रव्यदेवत हि भूतम् भावयितव्यो यजत्यर्थ । भूतभव्यसमुच्चारण च भूत भव्यायोपदिश्यते, तस्मान्न देवता प्रयोजिका" इत्यन्तेन सन्दर्भेण यजतिवाच्यस्य शब्दत फलसाधनत्वप्रतीत्या शाब्द प्राधान्य तस्यैव । देवतायास्तु भूतत्वेन भूतभव्यसमुच्चारण 'भूत भाव्यायोपदिश्यत' इति न्यायेन भव्ययजत्यर्थतया अप्रधानत्वान्न देवताप्रयुक्तत्व धर्मस्येत्येव सिद्धान्तितम् । एतावतैव सूत्रकारमनीषितसिद्धौ उपरि "अथ यदुक्तम्" इत्यादिना देवताया अबाधितस्मृत्युपचारान्यार्थदर्शनसिद्धविग्रहादिनिरासेन न किंचित्प्रयोजन पश्याम । उक्त च टीकायाम् । "यथा चातिथेर्विग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित्क्षति प्रत्युत स्वरूपलाभ एव । एव देवतायास्तद्वत्वेऽपि । न चात्र तत् प्रतिक्षेपसाफल्य पश्याम" (त टी पु ७३) इति । न च 'अपिवा' इत्यस्य पूर्वपक्षोक्तसर्वव्यावृत्तिपरतया पूर्वपक्षे च स्मृत्युपचारान्यार्थदर्शनैर्देवताविग्रहादीनामपि स्थापितत्वेन तत्प्रतिक्षेपस्सफल इति वाच्यम् 'अपि वे' त्यस्यार्धाङ्गीकारेण देवताप्राधान्यनिवृत्तिमात्रपरतयाप्युपपत्तौ सर्वव्यावृत्तिपरतामङ्गीकृत्य प्रमाणसिद्धदेवताविग्रहादिप्रतिक्षेपस्यानुचितत्वात् । उक्त च टीकायाम् । "अत्र 'अपि वा' इति सार्धाङ्गीकार पक्षव्यावर्तनम् । यद्यपि देवताविग्रहादिपचक दुर्निषेधम् । द्रव्याद्यपेक्षया सम्प्रदानस्य प्राधान्यम्, यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यम् सिद्धपरवाक्येषु च परावरदेवतयो स्वरूपादिकमनन्यार्थमामनाम, तथापि कर्तव्योपदेशेषु, यज्ञादिरूप कर्म स्वर्गादिफलसाधनतया चोदितत्वात् प्रधान सत् साध्यतया बुध्यारोहेण पुरुष प्रवर्तयति । कृत्स्न च देवतादि क्रियाशेषभूतम्" इति (त टी पु ७२)। किं च तस्य सर्वव्यावृत्तिपरत्वमङ्गीकृत्य स्मृत्युपचारान्यार्थदर्शनैरबाधितै पूर्वपक्षस्थापितविग्रहादीना वाङ्मात्रेण युक्त्याभासेन वा निराकरणमशक्यमयुक्त च । उक्त च टीकायाम् ।

"सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयो ।
देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम् ॥

शाबरे पूर्वपक्षोक्तदेवताविग्रहादिषु ।
स्वत प्रामाण्यवेदिभ्यस्त्वदते न निराकृति ॥

स्मृत्योपचारादन्यार्थदर्शनैश्च स्वभाषितम् ।
न गाम्भात्रेण निह्नोतु शक्यते नास्तिकेतरै ॥" (त टी श्लो २१६)

इति । देवताया विग्रहाद्यङ्गीकारे तत्प्रतिपादकवेदस्यादिमत्ताप्रसगभयेन शबरस्वामिना तन्निराकरण कृतमिति मा वोच । तादृशप्रसङ्गस्य "विरोध कर्मणीति चेन्नानेकप्रतिपत्तेदर्शनात् । शब्द इति चेन्नात प्रभवात्प्रत्यक्षानुमानाभ्याम् । अत एव च नित्यत्वम् । समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च (ब्रह्म सू १ ४ २६—२९) इति शारीरकदेवताधिकरण चतुस्सूत्रीमुपजीव्य परिहार्यत्वे न्याय्ये सति, युक्त्याभासेन मन्त्रार्थवादाना स्वार्थे प्रामाण्य निराकृत्यावारणीयत्वात् । न च शबरस्वामी शारीरक नोपजीवतीति वाच्यम् । पूर्वमीमासाप्रथमाद्यपचमे तदुपजीवनेनैवात्मनित्यत्वस्थापनात् । तदुक्त शारीरकतृतीयतृतीयशाकरभाष्ये शरीरेभावाधिकरण, "ननु शास्त्रप्रमुख एव शास्त्रफलोपभोगयोग्यस्य देहातिरिक्तस्यात्मनोऽस्तित्वमुक्तम् , सत्यमुक्त भाष्यकृता, न तु तत्रात्मास्तित्वे सूत्रमस्ति, इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरस्सर प्रतिष्ठापितम् । अत एव चाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव च भगवतोपवर्षेण प्रथमतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ 'शारीरके वक्ष्याम' इत्युद्धार कृत ' इति । अधिकोऽपि शाबरभाष्यातिवादप्रतिक्षेपष्टीकायामेव द्रष्टव्य इत्युपरम्यते शाबरभाष्यवैलक्षण्यप्रदर्शनात् ।

## ऐकशास्त्र्य शङ्कराचार्याभिमतम् ।

इदानीं शङ्करभाष्यप्रस्तावात्तदभिमत किंचित्प्रदर्श्यते । "ननु शास्त्रप्रमुख एवे" त्यादिना भाष्ये पौनरुक्त्याशङ्कनात्पूर्वोत्तरमीमासयोरैकशास्त्र्य शकराचार्याणामप्यभिमतमेवेति प्रतीयते । भिन्नशास्त्रत्वे पौनरुक्त्याशङ्कातत्परिहारयोरलग्नकतापत्ते । ऐकशास्त्र्याभावे आकर्षो वा कथ घटताम्? एकस्मिन्नेव हि शास्त्रे आवृत्तिराकर्षश्च दृष्ट इष्टश्च न भिन्नशास्त्रे । भामत्या चाय ग्रन्थ पौनरुक्त्यचोदनापरतया व्याख्यात "अधस्तनतन्त्रोक्ते पौनरुक्त्य चोदयति" इति । उपरि च तद्भाष्ये "इह चेद चोदनालक्षणषूपासनेषु विचार्यमाणष्वात्मास्तित्व विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय" इत्युक्तम् । अनेन च वाक्येन "विचारस्यास्य

'तन्त्रशेषत्वमाह " इहचेति, " इति भामत्यवतारिकया च उभयोस्तन्त्रयोरैकशास्त्र्यम् तदभिमतमिति ॊ, अन्यथा भिन्नशास्त्रोक्तस्य भिन्नशास्त्रशेषत्वायोगात् । रत्नप्रभायामप्येवमेवेद भाष्य स्पष्ट व्याख्यातम्। मिपरामृश्यैवाऽऽन्तमद्वैतसप्रदायरहस्यावेदिभि कैश्चिद्घतनाद्वैतिभिश्शास्त्रदीपिकाभूमिकाया यत् ष्यकारा हि पूर्वोत्तरमीमासयोरैकशास्त्र्यमुपवर्णयन्त, 'सहितमेतच्छारीरक षोडशलक्षण्ये' इति वदता रेण प्रतारिता एवेति मन्यामहे । वेदार्थो हि सिद्धसाध्यभेद" इत्यारभ्योक्तमसबद्धपदकजातम् पदननिहितहुतवहज्वालायितम् इति विपश्चिदपश्चिमा विदाङ्कुर्वन्तु ।

## उपवर्षस्याप्यभिमतमैकशास्त्र्यम् ।

तिष्ठत्वेतत् । अत्र च शकरभाष्ये " अत एव च भगवतोपवर्षेणे'त्यादिना वृत्तिकारस्योपवर्षस्या- स्त्र्याभिमतिर्व्यंजिता । अयमेवचोपवर्ष " सहितमेतच्छारीरक जैमिनीयेन षोडशलक्षणेन इति शास्त्रै- द्धे"रिति कण्ठरवेण द्वयोर्मीमासयोरशास्त्रैकत्ववादी । " भगवद्बोधायनकृता विस्तीर्णा ब्रह्मसूत्र- ' इति ब्रह्मसूत्रवृत्तिकृत्त्वेन प्रथमत एव श्रीभाष्यकृदुक्षिप्त भगवान्बोधायन । उपवर्षस्यैव इति पर्यायनामत्वात् । तथाचोक्त टीकाया स्फोटवादखण्डनावसरे "अत्र शाबरम् । 'गौरित्यत्र गकारौकारविसर्जनीया इति भगवानुपवर्ष इति ।' वृत्तिकारस्य बोधायनस्यैवोपवर्ष इति " इति । यस्य बोधायनस्य मतमेवानुसृत्य श्रीभाष्यकारा श्रीभाष्यमन्वगृह्णन् तस्यैव मत तत्र ण्डित दृश्यते शकरभाष्ये । तथा ह्यानन्दमयाधिकरणे वृत्तिकारमतानुसारेण प्रथम सूत्राणि ग्रान्तत " इदन्त्विह वक्तव्यमित्यादिना वृत्तिकारमत दूषितमुपलभ्यते । उक्त च रत्नप्रभायाम्, वृत्तिकारमत दूषयति—इदन्त्विति" इति । अदृश्यत्वाधिकरणे प्रथम वृत्तिकारमतानुसारेण । कृत्वा तद्दूषितम् " अन्ये पुनर्मन्यन्त" इत्यादिना । रत्नप्रभायामवतारितमेतत् " वृत्ति- ा दूषयति अन्ये पुनरिति" इति । एव वृत्तिकृन्मतदूषण शकरभाष्ये बहुस्थलेषु द्रष्टव्यम् । तु श्रीभाष्यकृता शकरादिमतनिरासपूर्वक तदेव बोधायनमत पुन प्रतिष्ठापितम् इति इद ायनमतमेवार्षमतिप्राचीन विशिष्टाद्वैतम् । तस्मादतिविप्रकृष्टकालिकशकरादिकल्पितमतान्तर- केंचित्काल लीनमिव भूत्वा पुनरपि श्रीमद्रामानुजमतत्वेन तत्र तत्र प्रकाशत इति प्रामाणिकाना ाण्डानामभेद्यो निर्णय इत्यल प्रसक्तानुप्रसक्त्या, प्रकृतमनुसराम ।

## टीकेयं श्रुतप्रकाशिकामप्यतिशेते ।

यद्यपि श्रीभाष्यव्याख्यानेषु प्राचीनेषु सरलसरलैरतिगहनगभीरैश्च वाक्यविशेषैरलङ्कृता " त क-ल्पकमन्यमपेतगर्व व्यासार्यसूक्तिर्वितनोति सद्य " इति प्राचीनै प्रशंसिता श्रुतप्रकाशिका वरिष्ठा तथापि तदनुक्तावश्यवक्तव्यबह्वर्थप्रकाशनात्क्वचित्क्वचिच्छ्रुतप्रकाशिकाभिप्रायविवरणाच्च **तत्त्वटीकेय वरिष्ठतमा** । तत एव तया अगतार्था चेति निरूपयाम । प्रथमश्लोकस्य दशार्थप्रतिपादकत्वप्रदर्शनमात्रेणैवास्यास्सर्वोन्नतत्व सुस्पष्टम् । तत्र च **भुवनशब्दस्य वैवक्षिकनिष्कर्षकत्वादिनिरूपण स्थेमशब्दसाधुत्वसमर्थनम् अखिलेत्यादि सर्वपदानाम् परपक्षव्यावर्तकत्वप्रदर्शनादिक** चान्यादृश विलोकनीयम् विवेचनचतुरै । प्रायशश्श्रुतप्रकाशिकाटीकयोस्तात्पर्यसाम्यदर्शनेऽपि प्रतिपद व्याख्यावैखरी विचित्रैव टीकायाम् । इद चाववेयम्, " इह तावत्साध्यसाधनद्वित्वनिरास विरुद्धाशभङ्गाय 'यदुक्त'मित्यादिना सामान्यतोऽनुमन्यते । अविद्यातन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकारविशेषतो विमतिरस्त्येव, स्वमते ह्यविद्यानिवृत्तिर्नाम स्वाभाविकवी-प्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेद । स च भावान्तररूप" इति लघुसिद्धान्तारम्भटीका । अत्र साध्य-साधनद्वित्वाभावोऽभ्युपगताश । अविद्याशब्दार्थे निवृत्तिशब्दार्थे ब्रह्मशब्दार्थे विज्ञानशब्दार्थे च विमतिर-स्तीति स्पष्टमुक्तम् । स्वमतेऽविद्यानिवृत्तिशब्दार्थौ च स्पष्टीकृतौ । श्रुतप्रकाशिकाया चाभ्युपगताश एव स्पष्टीकृत । उपरि विज्ञानशब्दार्थ एव विगानमुक्तम् । किंचिदुपरि '**विधित्सित**'मित्यस्य "विधित्सितम्—स्वमते साधनतया चोदयितुमिष्टम् । परमते तूत्पिपादयिषितम्" इति मतभेदेन अर्थभेदो वर्णित । न ह्येतच्छ्रुतप्रकाशिकाया व्याख्यातम् । एतदव्याख्याने विधित्सित ज्ञान कथ वाक्याद्वाक्यार्थज्ञान भवेत् ? विकल्पोऽय कथ वा सजाघटीति ? इति मन्दशकाया कथमुद्धारो भवेत् ? किंचिदुपरि **विवेचनीय**मिति पद 'अन्यतरकोटिनिरासेन कोट्यन्तरतया परिशेषणीयमिति यावत्' इति व्याख्यातम् । उपरि च तथा कर-णात्तथा व्याख्येयमवश्यम् । तच्च न व्याख्यात श्रुतप्रकाशिकायाम् । किंचिदुपरि **वाक्याद्वाक्यार्थज्ञानमात्रं** इत्येतत्पदद्वय " वाक्यार्थगोचरस्मृतिरूपविधेयज्ञानव्यावृत्त्यै **वाक्या**दित्युक्ति । इन्द्रियसबन्धाद्वाक्यतस्त-त्स्वरूपधीस्स्यात् पुत्राद्यनुमा च । तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम् । ध्यानादिद्वारनैरपेक्ष्य मात्रचोक्तम्" इति सदलप्रयोजन व्याख्यातम् । अवश्यव्याख्येयमप्येतच्छ्रुतप्रकाशिकाया न व्याख्यातम् । उपरि च **तन्मूल**मित्यत्र "परस्य वाक्यार्थज्ञान जीवपरयोरैक्यज्ञानम्, स्वस्य तु प्रकारप्रकारित्वबुद्धि । अतस्तन्मूल-त्वोक्तिरविरुद्धा" (त टी पु १४४) इति मतभेदेन वाक्यार्थज्ञानस्वरूपभेद प्रदर्श्य विरोध परिहृत । नैव-मस्ति श्रुतप्रकाशिकायाम् । तथा सति वाक्यजन्यजीवपरैक्यज्ञानस्य कथ वा विधित्सितसगुणब्रह्मोपास्ति मूलत्वमिति विरोधशका कथ वा निवृत्ता भवेत् ? तदुपरि " अत्रैवमद्वैतसप्रदायरहस्यम्—"आपातिक तु

ज्ञानमविद्या न निवर्तयति अनिश्चयात्मकत्वात्। विचारजन्या तु धी परोक्षाध्यवसायरूपभेदसत्यत्व भ्रम-जनकमविद्याश निवर्तयति। तथाप्यपरोक्षानादिभेदभ्रमोपचिता तद्वासना तादृश भ्रममाधत्ते। तदवष्टम्भोऽविद्याशस्तु अद्वैतसाक्षात्कारेण निवर्तते। निवृत्तेऽपि तस्मिन्प्रारब्धकार्यकर्मावष्टम्भ कश्चिदविद्याशोऽनुवर्तते। ता दशा जीवन्मुक्तिमाहु। सोऽप्यशोऽन्तिमाद्भोगसवेदनादात्मसवेदनाद्वा निवर्तते, ईदृशाविद्याशभेदाभि-प्रायेण 'इन्द्रो मायाभि पुरुरूप ईयते' इत्युच्यते। उक्तक्रमेण मायाशाना निवृत्तिमभिप्रेत्य 'भूयश्चान्ते विश्वमायानिवृत्ति' 'विमुक्तश्च विमुच्यते' इति श्रुतिराहेति। तत्र द्वितीयाश इहाविद्याया इत्युक्त" (त टी पु १४६) इति टीका। एव सकलव्याद्वैतसम्प्रदायरहस्यप्रकाशनवैचित्र्यमद्वैतग्र-न्थेष्वपि क्वचिन्न दृश्यते। एवमेतत्प्रकरणऽविद्याया अशत्रय चेत्सम्यङ्न निरूपितम् तदा वाक्याद्वाक्याऽर्थ-ज्ञानस्यापि परोक्षभ्रमाधायकाविद्याशनिवर्तकत्वेन भेदवासनायामनिरस्ताया वाक्यमविद्याया निवर्तकं ज्ञान न जनयती'ति वाक्य व्याहतमिव भायात्। तादृशभाननिवृत्त्यर्थं टीकाया "तत्र द्वितीयाश इहाविद्याया इत्युक्त" इत्युक्तम्। श्रुतप्रकाशिकायामेतादृशनिरूपणाभावात् तादृशभ्रमो नापैत्येव। किंचि-दुपरि। "यद्वे" त्यारभ्य "सनकादीना तृतीयाविद्याशस्थितिदशानुसारेण जातेपीत्युक्ति" रित्यवतरण (त टी पु १४७) चातिविलक्षणम्। एव पदेपदे निरूपणवैखरी निरीक्षणीया निरूपणनिपुणै। लघुसि-द्धान्ते च (१६२ पुटे) "सा च स्मृतिर्दर्शनसमानाकारा" इति वाक्यावतरणटीकाया "ननु ध्यानमेवेत्याद्य-युक्त। तदपि धारणावत्समाध्यर्थतयोक्तम्। समाधिरेव तु दर्शनात्मक 'आत्मान पश्ये' दित्यादिभि-र्मुक्तिहेतुरुक्त", इत्यादिना समाधेरेव मोक्षसाधनत्व ध्यानस्य तदगत्वमेवेत्याक्षिप्य "सैव हि स्मृतिर्वैश-द्यातिशयात् समाध्याख्या। न तु ध्यानफलमन्यद्दर्शन 'पश्येदि' इत्यादिषु च विधेयमित्यर्थ" इति दर्शनसमानाकारतापन्नध्यानस्यैव समाधित्वमेतद्भाष्यवाक्याभिप्रेतमिति व्याख्यातम्। नैवमस्ति श्रुतप्रका-शिकायाम्। एवमव्याख्याने ध्यानस्यैव मोक्षसाधनत्वसमर्थनपरैतत्प्रकरणस्थभाष्यस्य, समाधेरेव मोक्ष-साधनत्वप्रतिपादकै।

"विनिष्पन्नसमाधिस्तु मुक्ति तत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्" ॥

इत्यादिविष्णुपुराणादिवचनैर्विरोध कथमिव परिहृतो भवेत्? तत्प्रकरणोदाहृतश्रुतौ भाष्येऽपि कुत्रापि मोक्षसाधनज्ञाने समाधिशब्दप्रयोगाभावेऽपि "आत्मान पश्येदिति" श्रुतौ "दर्शनसमानाकारा"

इति भाष्यवाक्ये च समाधिपरता सघटयतामाचार्याणा साम्प्रदायिकार्थसकलनचातुरी कीदृशीति सशील नीय सम्प्रदायकुशलै । एतदनुबन्धिनी पूर्वोत्तरटीका च पठनीया । अन्योऽप्यय विशेष प्रकाशिकात २५९ पुटे, "**रज्वादेरपि परमार्थ्यं नानुवर्तमानतया किन्त्वबाधितत्वात्**" इति श्रीभाष्ये सत्पक्षकपारमार्थ्य-साध्यकानुवर्तमानत्वहेतावबाधितत्वस्योपाधित्व शकितम् । श्रुतप्रकाशिकायामप्यनुवर्तमानत्वहेतौ तस्यो-पाधित्वमात्रमुक्तम् । न तु तदुपपत्ति । टीकाया तु २६० पुटे "अबाधितत्वोपाधि पक्षव्यापक इति न वाच्यम् । माध्यमिकनयेन घटादितुल्यन्यायतया सतोऽपि बाधस्य सुवचत्वादिति भाव" इति तस्योपाधि-त्वमाक्षिप्य समाहितमिति । एव "**तथानुभूतेरननुभाव्यत्वेपि अननुभूतित्वप्रसङ्गो दुर्वारः । गगन-कुसुमादेरननुभाव्यस्याननुभूतित्वात् । गगनकुसुमादेरननुभूतित्वमसत्वप्रयुक्तं नाननुभाव्यत्व-प्रयुक्तमिति चेत्**" इति श्रीभाष्यस्य व्याख्यानटीकाया ३४७ पुटे असत्वस्योपाधित्वसमर्थन चातिविचित्र श्रुतप्रकाशायपरिशीलितम् । इत्थमिय श्रुतप्रकाशिकामप्यतिशेते किं पुनरितराणि व्याख्यानानि ।

## टीकेय श्रुतप्रकाशिकाया अनन्तरमेव प्रवृत्ता ।

ईदृशी चेय टीका "**अत्राप्यारभणाधिकरणे निपुणतरमुपपादयिष्यते**" इति श्रुतिषट्टारभगत श्रीभाष्यवाक्यपर्यन्तस्यैव संप्रति सर्वत्रोपलभ्यते । आचार्यैरान्तकृतापीयमस्मद्भाग्यविपर्ययात् प्राचीनछात्राणामन-वधानाच्च उपरि विलुप्ताभूदित्येव निश्चिनुमहे वयम् । श्रुत चास्माभिर्बहो कालात्पूर्वं, श्रीरगरामानु-जमुनिभि मूलभावप्रकाशिकायाम् अन्यत्र वा कुत्रचित् 'गुणोपसहारपादतत्वटीकायामेवमुक्तम्' इति यत्किंचिद्वाक्य व्यलेखीति । अतष्टीकेयमान्तमेव कृतेत्यध्यवस्याम । केचित्तु 'आचार्यपादा श्रुतप्रकाशिकाया लाभात्पूर्वमेवेमा टीकामारेभिरे, मध्ये व्यासार्यैश्श्रुतप्रकाशिका दत्वा सैषा प्रवचनी-येत्यनुशिष्टास्तद्दर्शनानन्तरमेवेमाम् एतावतैव व्यच्छिद' न्निति वदन्ति । तदत्य तासगतम् । टीकाया श्रुतप्रकाशिकानामनिर्देशपूर्वक तत्पङ्क्तेस्तदर्थस्य च बहुशोऽनुवादात् । तथाहि (१८३ पुटे) "अत्रैव प्रत्युक्त श्रुतप्रकाशिकायाम् 'भोगाद्दृष्टोद्बोधितपूर्ववासनासचिवात् विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्ते" इति पङ्क्त्यनुवादो दृश्यते । एव, १५ पुटे "अत एवात्राऽदिशब्दसमानाधिकरणजन्माद्यन्यपदार्थ-विशेषतयापि न मोक्षसग्रह उचित इत्याहुराचार्या । विशेषस्फोट्याभावात्" इति श्रुतप्रकाशि

कोक्तार्थानुवाद स्पष्ट । टीकाया च प्रायश केचिदिति व्यासार्यानेव निर्दिश्य श्रुतप्रकाशिकाविष-यानेवानुवदन्त्याचार्या । अत श्रुतप्रकाशिका बहुश परामृश्य पूर्वप्रदर्शितरीत्या तदनुक्तात्यावश्य-कविशेषार्थप्रदर्शनार्थं प्रवृत्तेयमित्येवास्माक निर्णयो बहुपरिशीलनसपादित शोभनतम ॥

**इत्थ रङ्गशठद्विट्टीकाया भूमिकामिमा भक्त्या ।**
**व्यलिखदनया प्रसन्नाः प्रीयन्ता वेदमौलिगुरुवर्याः ॥**

ईदृशी च श्रीवैष्णवसिद्धान्तप्रचारसभाध्यक्षाणा श्रीदेशिकग्रन्थमुद्रणप्रवृत्तिम् उत्तरोत्तर निर्विघ्न निर्वर्तयतु श्रीमान् **लक्ष्मीनृकण्ठीरवः** ॥

अस्यास्तत्त्वटीकायास्सशोधनकाले टीकायास्तालपत्रकोशत्रयस्य तालपत्रश्रीभाष्यस्य च सशीलनेन स्वपाण्डित्यातिशयेन च साहाय्यमाचरितवता **गोष्ठीपुराभिजनाना सुन्दरश्रीरामदेशिकाचार्याणा** तथा सभाध्यक्षै शोधकतया प्रकृताना तदा तदा मुद्र्यमाणपत्रिकापरिशोधनपरिष्कारादिना समये तत्प्रेषणन समीचीनप्रश्नादिना उत्साहजननेन च शोधनाय महदुपकृतवता मद्रपुरस्थाना **वेदान्तशिरोमणीना तोट्टालम् वेणुगोपालाचार्याणा** च कृते भवन्ति नारायणस्मृतय ।

तथा मातृकादर्शनशोधनलेखनादिकर्त्रे च मीमासाशिरोमणये **पादूरभिजनगोपालाचार्याय** च ॥

---

॥ श्री ॥

# तत्त्वटीकाविषयानुक्रमणिका

॥ श्रीः ॥

श्रीमते हयवदनपरब्रह्मणे नम ।

श्रीमते रामानुजाय नम ।

श्रीमते निगमान्तमहादेशिकाय नम ॥

## श्रीभाष्यम् ।

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिञ्शेमुषी भक्तिरूपा ॥

---

## तत्त्वटीका

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

मङ्गलाचरणम्

स जयति यतिराजमुनिः करुणाजलधिः क्षमापरिष्कारः ।
करिशैलकृष्णमेघः काङ्क्षितवर्षी यदर्पितैस्तोयैः ॥ १ ॥

स्वतस्सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटम्
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ २ ॥

प्रणम्य वरदाचार्यवादिहंसाम्बुदावपि ।
त्रय्यन्तसूत्रभाष्यार्थतत्त्वटीका विधीयते ॥ ३ ॥

असावनतिसङ्क्षेपादतिविस्तरवर्जनात् ।
सर्वन्यायानुकूलत्वादृह्यता सारवेदिभिः ॥ ४ ॥

शातितः शतदूषण्या शङ्करादिमुधाग्रहः ।
शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते ॥ ५ ॥

विश्वामित्रकुलीनेन वेदान्ताचार्यशर्मणा ।
शश्वद्विधीयते विश्वे तण्डिकविवेचनम् ॥ ६ ॥

निखिलनिगमश्रेणीचूडापरिष्कृतिमर्पिणी
निपुणमनसामाशामोधश्वस्थलीषु निवर्तयते ।
यतिपतिमुखे भाष्यस्यामौ यथाश्रुति[१]चिन्तित-
प्रवचनविधावष्टाविंशे जयध्वजपङ्क्तिका ॥ ७ ॥

तत्र तावत्—

विषयप्रयोजन-
सम्बन्धनिरूपणम् (१)

अखिलेत्यादिभाष्यस्य दशार्थानिदन्महे ।
विषयादित्रिकस्योक्तिः प्रथमं प्रतिपाद्यते ॥ ८ ॥

तस्यार्थस्य च सूत्रत्वात्तद्विस्तारात्मकं पुनः ।
अनवद्यमिदं पद्यं भाष्यलक्षणलक्षितम् ॥ ॥ ९ ॥

यद्यपि "अथातो ब्रह्मजिज्ञासा" इति सूत्रं ब्रह्म जिज्ञासोः तद्विचारस्य कर्तव्यत्वे प्रवृत्तम्, तथापि शारीरकविषयादिष्वपि अर्थतो वर्तते, यथा धर्मजिज्ञासासूत्रम् । आहुश्च—

---

१ यथाश्रुत पा (क)

" अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।
धर्माख्य विषयं वक्तु मीमांसायाः प्रयोजनम् " ॥ इति ।

एवमत्रापि

ब्रह्मेति तावद्विषयं प्राप्यत्वेन प्रयोजनम् ।
जिज्ञासाकर्मभावेन सम्बन्धमपि चाब्रवीत् ॥ १० ॥

निर्वचनपूर्वकब्रह्म-शब्दार्थविचार

निरतिशयबृहत्त्व हि ब्रह्मशब्दार्थः । *बृहतिधातोः " बृहेरम् च " इति मनिन्प्रत्यये अमागमे च ब्रह्मेति व्युत्पत्तेः, " ब्रह्म परिवृढ सर्वतः " इति यास्कोक्तेश्च । यत्तु आथर्वणिकी निरुक्तिः बृहणत्वमप्याह—" बृहति बृहयति तस्मादुच्यते पर ब्रह्म " इति, पौराणिकी च प्रसिद्धिः, " बृहत्वाद्बृहणत्वाच्च तद्ब्रह्मेत्यभिधीयते " इति, तद्गोबलीवर्दन्यायादिति न विरोधः । बृंहणत्वस्य बृहत्वविशेषत्वाच्च । तदयमर्थः—स्वतो बृहत् बृंहणत्वेनापि बृहदिति प्रयुक्तपदान्तरपौनरुक्त्यपरिहाराय सामान्यशब्दसङ्कोचो गोबलीवर्दन्याय इति लक्षणानुसारेण बृहच्छब्दो बृहणत्वात्मकबृहत्त्वादन्यत्र वर्तते । यथा " विष्णुनामा स वेदेषु वेदान्तेषु च गीयते " इति । तेनानवधिकातिशयबृहत्त्वमेव ब्रह्मशब्दार्थ इत्येके+ । अपरे तु बृहत्त्ववत् बृहणत्वमपि अनवधिकातिशय ब्रह्मशब्दार्थः " बृहति बृंहयति ", " बृहत्वाद्बृहणत्वाच्च " इति पृथगभिधानस्वारस्यात्, समुच्चयोपादानस्वारस्याच्चेत्याचक्षते । वयं तु ब्रूमः—उभयत्रापि विरोधाभावादुभयथाप्याचक्ष्महे इति । अयमत्र सग्रहः—

---

* टि—धातुस्वरूपस्फुटप्रतिपत्तये सज्ञापूर्वको विधिरनित्य इति न्यायेन गुणाभाव आदृत । बृहेरम् च इति पाठ उपलभ्यमानेषु उणादि सूत्रपाठेषु न दृश्यते ।

+ टि नयप्रकाशिकाकारा मेघनादादिसूरय, श्रुतप्रकाशिकाकारा सुदर्शनभट्टारकाश्च ।

बृहत्त्व ब्रह्मशब्दार्थो बृहणत्व तु तद्विदा ।
यद्वार्थो ब्रह्मशब्दस्य बृहणत्व बृहत्त्ववत् ॥ ११ ॥

[1]अथवा बृहत्त्वबृहणत्वसमुच्चयो वा । एतत्सर्वमभिप्रेत्योक्त जन्माद्यधिकरण-भाष्ये " उपलक्ष्य ह्यनवधिकातिशयबृहत् बृहणंच, बृहतेर्धातोः तदर्थत्वात " इति । अनयोश्च सर्वातिशायित्वमपरिच्छेदात् यास्कनिरुक्तिसामर्थ्याच्च सिध्यति ।

[2]अनुपाधिकनिर्देशो ह्यसकोचो मनीषिभि.
" सिद्धे शब्दार्थसबन्ध ' इति न्यायेन कथ्यते ॥ १२ ॥

ईदृश ब्रह्म अस्य शास्त्रस्य प्रधानविषय प्राप्यतया परम च प्रयोजनम् ; निरुक्तिद्वयार्थस्य द्विधाप्या विवरणात ।

प्राप्यत्व ब्रह्मण सिध्येद्बृहणत्वस्य कीर्तनात् ।
स्वप्राप्ते साधनत्व हि बृहणत्वमिहोच्यते ॥ १३ ॥

न च बृहतिधातौ बृहयतीत्यभिधानस्य विरोध इति वाच्यम्, " बृह बृहि वृद्धौ " इति धातुद्वयसिद्धत्वान्निरुक्तिद्वयवाक्यस्य ।

अर्थमात्रे च तात्पर्यादन्यधातोश्च सग्रह ।
तस्य धातोरिदित्त्वाच्च नुमागमसमन्वय [3] ॥ १४ ।

प्रयोजन चात्रावश्य वक्तव्यम् । तदप्याहु —

" सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजन नोक्त तावत्तत्केन गृह्यते ॥ " इति

' मीमासाख्या तु विद्येय बहुविद्यान्तराश्रया ।
न शुश्रूषयितु शक्या प्रागनुक्त्वा प्रयोजनम् ॥ " इति च ।

---

१ टि–अत्र अथवति पक्षान्तरद्योतक , वेति समुच्चयपक्षस्य प्रथमपक्षेण विकल्पद्योतक ।

२ अनुपाधिकनिर्देशे पा (क) ३ बृहेर्नोऽच्च (उ 4-595) इत्यनेन रूपसिद्धि ।

सबन्धस्तु विषयभूतेन ब्रह्मणा निर्णायकत्वादि., प्रयोजनभूतेन प्रापकत्वादिः, जिज्ञासापदविवक्षितविचारसाध्यविदीप्तितन्मूलविनतितत्साध्यरक्षा-[1] रूपैस्तु प्रयोजनैः यथार्ह साक्षात्परम्परया वा हेतुत्वबोधकत्वे ।

शास्त्रारम्भेषु सर्वत्र सबन्धः कथ्यते बुधैः ।
असबद्धप्रलापत्वे न प्रवर्तेत बुद्धिमान् ॥ १५ ॥

तदेव सौत्रमेव विषयादित्रिक श्रोतृबुद्धिसमाधानार्थमुपादित्सार्थ च विशेषतः ख्यापयन् प्रारिप्सितप्रबन्धस्य अविघ्नेन परिपूर्त्यर्थं प्रचयार्थं च शङ्कित-प्रत्यूहशान्त्यै शिष्टाचारादिसिद्धमिष्टदेवभक्त्याशीरूप मङ्गल स्वात्मनानुष्ठितमपि शिष्यशिक्षार्थं स्वकृतानुकीर्तनेन तेषा महिष्ठमङ्गलार्थं चादौ निबध्नाति भगवान् भाष्यकारः—अखिलेति ।

गुरोराचारमाश्रित्य वर्तन्ते मङ्गलार्थिनः ।
यान्यस्माकमिति श्रुत्या तदेतदभिधीयते ॥ १६ ॥

नमस्क्रियावस्तुनिर्देशावप्यर्थसिद्धौ, सर्वोत्तुङ्गमङ्गलतमतत्त्वोक्तेः । उक्त च—"नीचोच्चयोः स्वभावोऽय नन्तृनन्तव्यतात्मक." इति । अत्र सप्तम्यन्तैः सिद्ध-विषयप्रयोजनोक्तिः "श्रुतिशिरसि" इति अवान्तरविषयसग्रहः ॥

यथा हि वेदवाक्यस्य विषयो ब्रह्म कथ्यते ।
तथैव सूत्रवाक्यस्य त्र्यन्तः परिकीर्त्यते ॥ १७ ॥

विदीप्तिविनतरक्षाशब्दैः साध्यप्रयोजनत्रयकीर्तनम्, विशिष्टा अत्र दीप्तिः विदीप्तिः—निर्णयः । स तु विचारतः । यथाहुः—

"धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभाग मीमासा पूरयिष्यति" ॥ इति ।

---

१ रक्षण पा (सु)

उक्त च न्यायसुदर्शने—

" ज्ञायमाने तु वेदान्तै. करणैः परमात्मनि ।
इमामुत्तरमीमासामितिकर्तव्यता विदुः ॥ ' इति

" वेदस्य निरपेक्षत्वलक्षणप्रामाण्ये सत्यपि प्रतिपत्तृमतिमान्द्यापराधनिमित्तसशयविपर्ययापनोदनमनया क्रियते " इति (च) ।

प्रयोजनोक्तिरासस्य निश्चये निश्चय दिशेत् ।
तत्सन्देहेऽप्युपादित्सा मिद्धा मन्धुक्षयेदसौ ॥ १८ ॥

तत्र सामान्यत प्रयोजनवत्त्वनिश्चयेऽपि स्वापेक्षितप्रयोजनकथनमवश्यकर्तव्यमेव । तदिह सबन्धोऽपि सूचित एव, सबन्धाश्रयभूतशास्त्रप्रयोजनादीनामुपादाननान्तरीयकत्वात्सबन्धावगमस्य ।

विचारत्व विचार्यत्व निधार्यत्व तथेतरत् ।
प्राप्यत्व प्रापकत्व च सम्बन्ध इति कथ्यते ॥ १९ ॥

तत्र तत्त्वत्रयमर्थपञ्चकमित्यादिकमध्यात्मविद्भिरत्यादरेण परिगृहीतमर्थजात स्वयमेव सूरिभि सप्रत्याय्यमिति न विविच्य लिख्यते ।

मङ्गलाचारस्य प्राधान्यम् (2) विषयादिप्रधानत्वमाद्यपद्ये समीरितम् ।
अधुना मङ्गलाचारप्राधान्यमनुवर्ण्यते ॥ २० ॥

स च मङ्गलाचारः केषुचित् ग्रन्थेषु अदृष्टोऽपि निमित्तफलाभ्या मुन्नेयः । आहुश्च—

" प्रारिप्सित निमित्त स्यादविघ्नेन समापनम् ।
प्रचयश्च फल तस्मान्मङ्गलाचार इष्यते ॥ " इति ।

---

* टि–अत्र इतेरनन्तर चकार उचित ।

अविघ्नसमाप्त्यादिसवलितस्य प्रबन्धारम्भस्य तत्राधिकारिविशेषणत्वमित्यर्थः। उक्त च विवरणकारैः—"सवलितमत्र विशेषणम्, जातेष्टिवत्, यथा जातेष्टौ पुत्रजन्मनो निमित्तत्वेऽपि आर्थवादिकाना पुत्रगतपूतत्वादीना फलत्वकल्पनम्। न च गौरवम्, फलस्य विशेषणत्वे प्रवृत्तिसौकर्यात्। फलमात्रे तु गर्हानुपपत्तिः। न हि काम्याकरणे गर्हा" इति।

अथवा शबरशङ्करग्रन्थयोरनीश्वरप्रतिपादकत्वात् ईश्वरनमस्कारादिमङ्गल न कृतमिति व्याचक्षते। न च *पक्षिलादयः परमास्तिका निमित्ते सत्यपि मङ्गल नाचरन्तीति सिद्ध भवति, अपितु कृतस्यापि नमस्कारादेर्मङ्गलस्य ग्रन्थनिवेशनमेव न कृतमिति व्याकुर्वते। केचित्तु ईश्वरवाचकस्य प्रमाणशब्दस्य प्रथमोपादानात् कृतमङ्गलाचार एव पक्षिलमुनिरिति व्याचख्युः। अननुष्ठितमङ्गलत्वे वा कथ फलसिद्धिः? अनुष्ठितमङ्गलानान्तु फलव्यभिचारः कर्मकर्तृसाधनवैगुण्यमवलम्बते। नन्वारब्धसमाप्तिकामो मङ्गलमाचरेदिति विध्यभावादकर्तव्यत्व मङ्गलाचारस्य। अय खलु [1]अनधिगतवेदानामश्रुतमीमासानामालापः, अविगीतशिष्टाचारस्यैव मूलप्रमाणकल्पकत्वात्। तत एव चोदनालक्षणत्वसिद्धिः। न च मङ्गलाचाराभावेऽपि फल दृष्टमिति वाच्यम्, ससारस्यानिदप्रथमतया तस्यापि भवान्तरीयसुकृतविशेषनिबन्धनत्वात्। न च किमनेन मङ्गलाचारेण? तदेव फल प्रददातीति वाच्यम्। तत्सद्भावे निश्चयाभावात्, निमित्तानुबन्धिनो नैमित्तिकस्य शिष्टाचारप्राप्तत्वेन [2]आवश्यकत्वाच्च।

किञ्चिदारभमाणस्य बुद्धिस्थ पूरणादिकम्।
त्यक्त्वान्यफलक्लृप्तिस्तु नीतिमज्ञो न रोचते ॥ २१ ॥

---

* टि—पक्षिल वात्स्यायन न्यायसूत्रभाष्यकर्ता

१ अनधीत पा (क, ग, घ)

२ अवश्यकर्तव्य पा (क, ख, ग)

भक्तिराशास्यमानापि पूरणप्रचयाविह ।
नोपरुध्य प्रवर्तेत सा च तौ च तदाशिषा ॥ २२ ॥

भक्तिर्हि मङ्गलतमा तद्बोधादेश्च कारणम् ।
तस्मात्सर्वप्रधानत्वाद्भक्तेराशासन वरम् ॥ २३ ॥

अथवा भक्तिभेदत्वान्नमस्कारार्चनादिकम् ।
सर्वमेव हि माङ्गल्यमाशास्यमिह मन्महे ॥ २४ ॥

मङ्गलस्य ग्रन्थे निबन्धनीयत्वम्

स्यादेतत् । अस्तु तावन्मङ्गलाचारः । मङ्गलनिबन्धस्तु तत्तद्भाष्येष्वदर्शनादयुक्त इति चेन्न, उपयोगात् अनिषेधात् ।

शिष्याणा शिक्षण तावत्तेषा स्वकृतकीर्तनात् ।
महिष्ठमङ्गलावाप्तिस्तत्फल प्रागुदीरितम् ॥ २५ ॥

द्रमिडभाष्यादिषु "नम प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे, नमो जैमिनये वेदरहस्यसपुटनिगूढविष्फारयित्रे न्यायप्रज्वलितचेतसे, नमोऽस्त्वाचार्येभ्य" इत्यादिभ्य. तद्दृष्टेश्चावश्यकर्तव्य एवायमाचारः । ईश्वरापह्नोतॄणामाचारो नार्थेय इति प्रागेवोक्तम् । "स्मृत्याचारविरोधे तु स्मृतिरेव बलीयसी" इति न्यायाच्च सिद्धमेतत् । स्मर्यते च तत्र मङ्गलाचार.—

"मङ्गलाचारयुक्ताना नित्यञ्च प्रयतात्मनाम् ।
जपता जुह्वता चैव विनिपातो न विद्यते" ॥ इत्यादिभिः ॥

करणत्रयसारूप्यात्कथ्यते मङ्गलक्रिया ।
तस्माद्ग्रन्थनिवेशोऽपि मङ्गलस्य प्रमाणवान् ॥ २६ ॥

पूर्वे पुलस्त्यमुख्याश्च क्रियासमभिहारतः ।
कार्यारम्भेषु सर्वेषु मङ्गलाशासन विदु ॥ २७ ॥

मङ्गलाचारः पुराणारम्भे दृष्टश्च "प्रणिपत्याभिवाद्य च" इति गुरुप्रणिपातादिरूपः। अत एव "युष्मदस्मत्" इत्यादौ कुग्रन्थत्वमाशङ्क्य प्रत्यक्तत्त्वानुसन्धानेन मङ्गलत्वमाचख्युर्व्याख्यातारः। तच्च मन्दम्, युष्मदर्थानुसन्धानस्यैव तत्रापि प्राथम्यात्, मध्यलघुत्वेन वह्निदेवत्यस्य रगणस्य निवेशाच्च ।

शन्नोमित्रादयो मन्त्राः शतं ते सूरिभिस्स्मृताः ।
कर्मानुष्ठानकालेषु पठितव्या मनीषिभिः ॥ २८ ॥

एवमिह पद्यनिबन्धनचोद्यम[1]प्यपष्ठु। दृष्ट च केषुचित् "प्रणम्य हेतुमीश्वरम्" इत्यादि ।

मङ्गलश्लोके अकारोपक्रमस्य प्रयोजनम्

अकारोपक्रमश्चास्मिन्मङ्गलत्वाभिसन्धितः ।
निश्शेषत्वन्तु सुगमं निखिलेत्यपि भाषिते ॥ २९ ॥

अन्यार्थोऽप्यत्र वर्णोऽय विष्णुनामस्वभावतः ।
यदृच्छाशङ्खशब्दादिन्यायाद्भवति मङ्गलम् ॥ ३० ॥

आदौ च पाणिनीयादेस्तथान्यैरनुवर्णितः ।
सूत्रे चाथादिरन्यार्थस्तदर्थोऽप्यन्त्रमन्यत ॥ ३१ ॥

[2]अतोप्यत्र शुभत्व स्याद्वैकल्यप्रतिषेधतः ।
निषेध्यभेदतो ह्यस्य शुभाशुभविकल्पना ॥ ३२ ॥

---

१ चोद्यमपष्ठु पा (ख)

२ टि—अत इति अशब्दात् सार्वविभक्तिकस्तसि, अकारस्येत्यर्थः । नञोऽप्यत्र पा (क, ख)

प्रभृत्यनुवृत्तेः। कर्मत्वोक्तावीप्सिततमतया प्राधान्येन विषयत्व प्रयोजनत्व च सिध्येत्। अतः मदपि स्वस्वामिभावादि अत्र न वक्तव्यमिति भाव। तथाप्यस्तु सामान्यतः प्राप्ता शैषिकी षष्ठी, विशेषस्त्वौचित्यलब्धेरवाच्य इत्यत्राह– **कर्तृकर्मणोः** इति। सम्बन्धविशेषेऽपि षष्ठीविधौ सिद्धे, साकाङ्क्षसूत्रोक्तात् [1]निराकाङ्क्षसूत्रोक्त युक्तम्। तत्र विशेषयोर्विधिसाम्येऽपि कर्तुः सकर्मकाकर्मकसाधारण्यात्, इह च कर्त्रर्थत्वायोगात् असाधारणाकाङ्क्षिततमकर्मोपस्थापनमुचितमिति भावः।

ननु किम् अर्थलभ्ये शब्दव्यापारेण? नचैव प्रतिपदानुशासनवैयर्थ्यम्, तस्य कर्मादिविवक्षायामपि द्वितीयानिषेधेन षष्ठीसाधुत्वे तात्पर्यात्। अतो विशेषविधिर्न शैषिकषष्ठीमपवदेत्, तद्ग्रहे च व्यवहितसम्बन्धस्यापि तदन्तःस्थितेर्ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञासासम्बन्धात् तत्कर्मत्वस्य चार्थसिद्धेः कृत्स्नशारीरकार्थविचार्यत्वसूचनमधिक प्रयोजनमित्यत्राह–**यद्यपि** इति। **परिग्रहः**—परितो ग्रहः, सानुबन्धग्रहणम्, उत्तरग्रन्थे तु **गृह्यते** इत्युक्त्या [2]अनुबन्धिसम्बन्धस्याशाब्दत्वमात्रमभिप्रेतम्। **कर्मापेक्षत्वेन**— सकर्मकतया प्रथम कर्माकाङ्क्षाजननस्वाभाव्यात्। कर्मार्थत्वसिद्धिर्नाम कर्तृत्वव्युदासेन षष्ठ्या कर्माख्यविशेषेऽर्थेन पर्यवसानम्। परप्रत्यायनार्थे प्रयोगे विलम्बितधीहेतुर्न ग्राह्य इत्यभिप्रायेणाह—**तथापि** इति। न ह्यत्र अर्थलभ्ये शक्तिक्लृप्तिः, किं तु आक्षेप्याद्वर क्लृप्तशक्तिकशब्दोक्तमित्युच्यते। ननु 'आक्षेपतः'—[3]इत्युक्तमयुक्तम्, आकृत्यधिकरणनीत्या सामान्यशक्तेः विशेषपर्यन्त-

---

१ निराकाङ्क्षोक्तम् पा (सु, क, घ, च)

२ (सु) कोशे 'अनुबन्धि' इति नोपलभ्यते

३ इत्ययुक्तम्—पा (क घ सु)

त्वस्य वक्ष्यमाणत्वात्। मैवम्—सा हि विशेषमात्रमुपादत्ते, न कर्मत्वादिकम्; न हि गोशब्दशक्तिर्विशेषत खण्डत्वादि[1] गृह्णाति, न चात्र आभिधानिकग्रहेऽपि अनुबन्धित्याग इति भ्रमितव्यम्, सामान्यतो धीस्थानुबन्धविषयत्वात् सर्वत्र जिज्ञासाया। एवमपि आक्षेप स्वीकृत इति चेत्, सत्यम्—अन्यतरकर्मत्वस्यापि शाब्दत्वमुभयकर्मत्वाक्षेपाद् वरम्, किमुत प्रधानांशकर्मत्वस्याक्षेपात्; एवकार शीघ्रधीहेतोर्बलीयस्त्व व्यनक्ति। कथ ब्रह्मण॰ कर्मत्व शाब्दम्, 'धातोः कर्मण समानकर्तृकादिच्छाया वा' इति ज्ञानस्यैव कर्मत्वात्, मैवम्—सन्नन्तत्वेऽपि प्रकृत्यनुसारेण सकर्मकत्वाकर्मकत्वविभागः। अत एव हि प्रकृत्यर्थकर्मापेक्षया 'कर्तृकर्मणो' इत्यनुशिष्टि., "धर्मो जिज्ञासितव्य." इत्यादौ च धर्मादेरभिहितकर्मत्वम्।

कर्मत्वस्य आभिधानिकत्वम् ननु तथापि नाभिधानिकत्वम्—उपपदविभक्तेरर्थाभावात प्रयोगमात्रात् तस्या सार्थत्वे गाव्यादावपि प्रसक्ते। न च तत्र शक्तिरस्ति।

न शब्दशक्तिर्गाव्यादौ गोपद स्मार्यते ततः।
बुद्धिस्थेनैव [2]तेनाथ गोजाति. प्रतिबुध्यते ॥ २०२ ॥

आप्तप्रयोगस्तु अनर्थकत्वेऽपि साधुत्वात स्यात्, अन्यत्रापि न॰दृष्टेः, सम्मतेश्च। अनुशिष्टिश्च तावद्विशेषव्यक्त्यर्था, तत्तदर्थधियस्त्वन्यसिद्धे., अन्यलभ्ये शक्तेरकल्प्यत्वात्, गत्यन्तराच्च बहुशक्तिकल्पनायोगात्, न शक्तिरौपयिकी, तत्र—यथा 'कर्तृकरणयोः' इत्यादिवशा

---

१ ग्राहिणी पा (ख घ ङ)
२ तेनापि पा (ङ, घ, च)

कारकविभक्तिः सार्थी अनेकार्थी च, तथा 'कर्तृकर्मणोः कृति' इत्यादिबलात् उपपदविभक्तिरपि, अन्यथातिप्रसङ्गात्, कारकविभक्तेरुपपदविभक्तिदौर्बल्यं तु पदान्तरविमर्शसापेक्षतामात्रात्। तथापि न शक्तिभङ्गः। पदान्तरसंनिधिरत्र शक्तिं व्यनक्ति, न त्वाधत्ते, यथा नानार्थगवादिशब्देषु। यद्वा अत्र अनाभिधानिकत्वेऽपि विशेषानुशासनानुमतवृत्तिविशेषवद्विभक्तिसिद्धस्य शाब्दसमत्वं व्यञ्जयितुम् आभिधानिकत्वोक्तिः। कर्मत्वस्य सत्राभिधानसिद्धत्वमाभिधानिक[1]शब्देन प्रतीयते, उपपदस्वरूपविमर्शस्य पदत्रयविमर्शात् अविलम्बितत्वाच्च।

ननु न विग्रहवदिह समस्ते विभक्तिरस्ति, येनाभिदध्याल्लक्षयेद्वा। न चाश्रुतापि स्मर्ताभिधत्ताम्, प्रयोगस्यापि तद्वीमात्रार्थत्वादिति वाच्यम्, समासनान्तरीयकतया विभक्तिस्मरणनियमे मानाभावात्, सर्वत्र च लक्षणाद्युच्छेदप्रसङ्गात्। पक्षवा चाभिधानमिति तद्विरा। तदेवमभिधायकाभावे कर्मत्वस्य कथमाभिधानिकत्वं तत्समत्वं वा।

अत्र सम्बन्धसामान्यं कर्मत्वं वा समीहिते।
विभक्तिलोपात्सोऽन्या प्रकृत्यैव हि लक्षणा ॥ २०३ ॥

अथानुशासनाधीननिरूढलक्षणाया अभिधानसमत्वाच्छाब्दत्वमिति मतम्, समासवृत्तावपि समम्। यत्र तु कश्चित्—व्यासे समासे च सविभक्तिकाविभक्तिकशब्दयोः सर्वाधिकरणशब्दन्यायेन समैव शक्तिः, अतो लुप्तविभक्तिकयापि

---

1 [illegible] शब्देन द्वयम् पा (ग), शब्देन द्वय तु पा (घ)

2 टि [illegible] पक्षवा कथम् आभिधानमिति तद्विरा समासान् व्यासस्य भेद

3 [illegible] पा (क), (ख), [illegible] पा (ग)

4 टि [illegible] आवश्यकम्

प्रकृत्या सम्बन्धो न लक्ष्य , वाच्यसम्बन्धिनि वस्त्वन्तरे वृत्तिर्हि लक्षणा, न च सम्बन्धस्सम्बन्धी । कर्मत्वादिश्च [1]सम्बन्धरूप । एव स्वपरनिर्वाहकतया सम्बन्धफलसिद्धावपि तथा विवेकरहितानामप्यत्र प्रकृत्या विभक्त्यर्थधीर्दृष्टा, सन्नपि चाजानत [2]सम्बन्धो न लक्षणाहेतु, अतिप्रसङ्गात्, अतः प्रयोगस्यानन्यथासिद्धेरन्यथासिद्धिशङ्कायाश्चानुशासनेनोपरोधाद्विभक्त्यर्थ समासेऽप्यभिधेय. । एव [*]विभक्तिव्यतिरिक्तलोपेष्वपि नीतिः । ननु निषादस्थपतिशब्दे विभक्त्यर्थलक्षणादोषापनुत्त्यै षष्ठीसमासस्त्यज्यते, तत्कथमाभिधानिकत्वम् । तन्मुख्यत्वे तु क्लृप्तकल्प्यविरोधे क्लृप्तस्यैव ग्राह्यत्वान्नान्यत्राधिकारक्लृप्ति., मैवम्—

"सामानाधिकरण्यस्य प्राग्वैयधिकरण्यत. ।
अविलम्बितधीयोगात् प्राबल्य प्रतिपादितम्" ॥

इति न्यायेन शैघ्र्याच्छाब्दव्यवहार । अथानुशासनस्वारस्यादर्थः, तर्हि यथानिर्णये तु नादरः, अर्थाविरोधात् इति । उपपदविभक्तावुक्तमिद समासेऽपि भाव्यम् ।

सोऽय वैभववादो वा परमार्थोक्तिरेव वा ।
आभिधानिकतोक्तिस्तु युक्ता धीशैघ्र्यबोधनात् ॥ २०४ ॥

---

१ सम्बन्ध पा (क, ख, घ, च)

२ सम्बन्धे पा (क, घ)

* टि—इयत्, शाकपार्थिव इत्यादिस्थलेषु

गमनादृत ष्टार्थं, स्वेष्टे चोपचारवृत्तिं क्षिपन् सर्वतः परिवृढत्वाय
अनात बृहत्त्वबृंहणत्वे चानवच्छिन्ने विवृणोति—ब्रह्मशब्देन च इति। यस्त्वर्थः
,ानिगमे। 'स्वभावत' इत्यादिना [1]परकल्पितैः सदोषत्वनिर्गुणत्वावाच्यत्वा-
निज्ञास्यत्वप्रसङ्गोऽपास्तः। निरस्तनिखिलदोषत्वं च बृंहणत्वोपयुक्तो बृहत्त्व-
नेजाय। गुणादिविधिनिषेधयोरुत्सर्गापवादादिनीतिविषयत्वं विशेषणद्वयेन
र्शितम्।

विशेषविधिबाधेन तदन्यार्थत्वकल्पनात्।
सामान्यवृत्तिसङ्कोचं वरं नीतिविदो विदुः॥ २०५॥

परपक्षे तु मिथ्यात्वसत्यत्वविवादेऽपि निरस्यत्वेनाभिमतानां दोषाणामारोपतः
उपा यत्वच्छेदतः स्वाभाविकाशतो वा परब्रह्म [2]श्रयत्वात् तत एव सार्वज्ञ्यादि-
भङ्गाच्च जिज्ञास्यत्वायोगः श्रुत्यादिकोपश्च स्यादिति भावः। स्वरूपतो नामान्तर-
भजनार्हावस्थावन्तोऽचित्पदार्थाः, तदभावेऽपि क्लेशादिमन्तो बद्धाः, कतिपयक्लेशादि-
रहिता मुमुक्षवः, तदत्यन्तोच्छेदवन्तो मुक्ताः, तदत्यन्ताभाववत्त्वेऽपि पराधीन-
तयात्मा नित्याश्च बुद्ध्यवतार[3]क्रमेण निरस्तनिखिलदोष इत्यादिमुखेन [4]प्रथमे
विशेषणे व्यवच्छेद्याः। तत्र स्वभावत इति पदेनानादित्वविवक्षाया मुक्ताः, अनन्या-
धीनत्वविवक्षाया नित्याश्च व्यावर्त्यन्ते। द्वितीयेऽपि ते सर्वे। अन्यासम्भाव्यगुण-
विशे. नित्या एव वा, तेषां ज्ञानादेर्ब्रह्मसाम्येऽपि हि पराधीनत्वं सिद्धम्, शक्तिस्तु
नना न्यूना। वक्ष्यति च सत्यादिवाक्ये अनन्तपदव्याख्याने—"सातिशयस्व-

१ परि पा (क, च)
२ श्रितत्वात् पा (छ)
३ क्रमादस्तदोष पा (ख, घ, च), क्रमान्निरस्तदोष पा (क)
४ प्रथम पा (छ)

रूपगुणा नित्या व्यावृत्ताः" इति। न हि ते विश्वव्यापिनः, नापि सर्वशरीरिणः, अतिशयशब्देन धातूक्ता वृद्धिरतिशायनमिति व्यञ्जितम्। अनवधिकविशेषणेन शतगुणितोत्तरक्रमप्रदर्शितनिरतिशयदशाशिरस्कत्वोक्तिः, 'ईश्वरस्य ज्ञानानन्दादिगुणयोगः कादाचित्कः, तच्छक्तिस्तु नित्या' इति पक्षः स्वभावत इति पदानुषङ्गात् प्रतिक्षिप्तः। ज्ञानाद्येकैकगुणविततिरूपावान्तरगुण-वर्गख्यापनाय गणशब्दः। उक्त च षाड्गुण्यविवेके—

" तवानन्तगुणस्यापि षडेव प्रथमे गुणाः।
यैस्त्वयैव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः" ॥ इति।

अनवधिकातिशयशब्दोऽत्र गण विशिषन् प्रत्येकमतिशयपरश्रुत्या 'विदुषी परिषद्' इति न्यायाच्चार्थतो गुणान् विशिनष्टि। अन्यथान्यपदार्थासिद्धिः, सत्या गतौ व्यधिकरणबहुव्रीह्ययोगः। 'शैलजन्मा' इत्यादिषु अगत्या तत्स्वीकार। एतत्सूत्रसवादिन्या "परीक्ष्य" इत्यादिश्रुत्या ब्रह्मपुरुषशब्दोक्तजिज्ञास्यनिष्कर्ष, सर्वोपनिषदा पुसूक्तैकार्थ्यम्, ईश्वरस्याध्यस्तत्वब्रह्मांशत्वासम्भवम्, ईदृशस्य गीतानिरुक्त्या प्रकृत्यादेर्देवतान्तरेभ्योऽपि विशेषव्यक्ति चाभिप्रेत्याह—पुरुषोत्तम इति। अवधारणमिह ग्राह्यम्।

यद्यप्यत्र समानाधिकरणसमासे पौर्वापर्यव्यत्ययः, निर्धारणे तु षष्ठ्या न समासः, तथापि "द्वाविमौ पुरुषौ" इत्यारभ्य "उत्तमः पुरुष-स्त्वन्यः" इत्यधमप्रतियोगित्वोक्त्या सम्बन्धिशब्दतया समासः स्यात्, "अक्षरादपि चोत्तमः" इत्यनेन पञ्चमीसमासो वा सूच्यते। योग-विभागस्तु यथाप्रयोगमिष्टः, अत एव सप्तमी निर्धारणेऽपि समस्यते। नागोत्त-

ब्रह्मशब्दस्य पुरुषोत्तमे मुख्यवृत्तत्वम्

गादिशब्दाश्चैव शाब्दैः [1]निर्व्यूढाः । “ रूढ्या तु काम पुरुषोत्तमोऽस्तु ” इति वदन् श्रत्यादिबाध्यः, “ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ” इति सर्वविदुक्तेः। अभिधीयते—मुख्यवृत्त्या विषयीक्रियते । एतेन तदेकनाम्नो ब्रह्मशब्दस्य तत्रैव लक्षणामिच्छन्तो निरस्ताः , [2]रूढिविषये क्वचिल्लक्षणा वदन्तश्च निरस्ताः ।

सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य [3]मुख्योऽर्थः । स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः । तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात् भगवच्छब्दवत् ।

ननु गवादिशब्दवज्जातिद्वारा, पाचकादिशब्दवत्क्रियाद्वारा, डित्थादिवद्य-दृच्छया वान्यत्रापि मुख्यता स्यादित्यत्राह—सर्वत्र इति । प्रकृत्यादिष्विव ब्रह्मशब्दस्थलेष्वित्यर्थः । तेषु मिथो विषमेषु तदन्यव्यावृत्ता जातिः क्रिया वा न दृष्टा । बृहणत्व तु बृहत्त्वापेक्षम्, अतस्तन्निमित्तत्वे गौरवम् । बृहत्त्व च किञ्चित्तत्र तत्र प्रकृत विवक्षित च । ब्रह्मशब्दवृत्तिद्वारा तन्निरुपाधि-कवृद्धिरूपधात्वर्थप्रसिद्धिश्च नोपेक्ष्या, अतस्सम्भवद्गत्यन्तरे न यदृच्छापीति भावः । हिः प्रसिद्धौ हेतौ वा । तर्हि बृहच्छब्दवदसौ बृहत्त्वमात्रनिमित्त' स्यात्, नेत्याह–बृहत्त्वम् इति । सर्वतः *प्रभुत्व(बृहत्त्व)मसङ्कोचात् स्वरूपतो गुणतश्चे-त्युच्यते । तेन परिच्छिन्नस्वरूपाणा गुणबृहत्त्वरहितस्य गुणादेश्च व्यवच्छेदः । अस्येत्यनेन बृहच्छब्दाद्यावृत्तिर्दर्शिता । न ह्यसौ ‘ इत[1] इद ब्रह्म ’ इत्यवधि-

१ निरूढा पा (सु, घ)

२ रूढ पा (सु, घ)

३ मुख्यार्थ पा

* टि—‘ बृहत्त्व ’ इति पाठ प्रकरणात् उचित इति भाति

गौण्वान अन्यथोपचार एव[1]लुप्येत । अस्ति चासाविति गौणमुख्याधिकरणे स्थापितम् । क्वचित्तु अगत्या अनेकशक्तिक्लृप्तिरित्याशयः ।

नैघण्टुकैस्त्वनादृत्य शब्दनिष्कर्षणं गिराम् ।
प्रयोगप्रौढिशिक्षार्थं पठ्यतेऽनेकनामता ॥ २०६ ॥

यदत्र नियामकतयोक्त लोकोत्तरबृहत्त्व, तेनैवैकेन निमित्तेनान्येष्वपि मुख्यत्व स्यात्, अन्यथा विपरि[2]वर्तः किं न स्यादित्यत्र दत्तोत्तरत्वमभिप्रयन्,

ब्रह्मशब्दस्य सर्वेश्वर-परत्वनिर्वाह

"प्रत्यक्षेऽपि विसवादो येषा[3]करस्त्वयमुत्तरम् ।
तेभ्यो दद्यादिति ज्ञात्वा वृद्धाना मतमब्रवीत्" ॥

इति न्यायात्[4] पुराणोक्तीः निदर्शयति—**भगवच्छब्दवत्** इति । तत्र "शुद्धे महाविभूत्याख्ये" इत्यादिना, "अन्यत्र ह्युपचारतः" इत्यन्तेन यौगिकार्थपौष्कल्यवत्येव मुख्यत्वमुक्तम् ।

पुराणान्तरेऽपि—

"भगवानिति शब्दोऽय तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने" ॥ इति ।

दार्ष्टान्तिकमपि गारुडे स्थापितम्—

---

१ न कल्प्येत पा (ख)
२ वृत्ति पा (च)
३ करस्त्वयम् पा (ङ, घ)
४ पुराणोक्तिम् पा (ङ, ख)

' वेदे भूरिप्रयोगाच्च गुणयोगाच्च' शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने " ॥ इत्यारभ्य,

" यस्मिन्प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः " ॥ इति ।

तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म । ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते ।

अस्त्वेकत्रास्य शक्तिः, अस्मिन् सूत्रे भेदकाभावादमुख्यत्वं किं न स्यादित्यत्र,

' नास्ति भेषजमन्यत्र नारायणरसायनात् ।"

" वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः " ॥

इत्यादिप्रमाणगत्या प्रत्याह—ताप इति । तद्यत्र मुख्यस्य बाधः भगवतः स्वतन्त्रस्वामित्वात् । अस्वतन्त्रस्यान्यस्य [1]चायम् अर्थसिद्धः, " जुष्टं यदा पश्यत्यन्यमीशम् इत्यादिभिस्सोपबृंहणैः परोपास्तेरेव तापत्रयनिवर्तकत्वोक्तेः । स एव मन्तव्योऽन्वेष्टव्य इति विचार्यत्वेन श्रुत इति भावः " अनेकार्थत्वेऽपि [illegible] प्रयोगे [3]असाविवार्थ इत्याह " इ[illegible]

[1] [illegible]
[2] [illegible]
[3] [illegible]

विवरण त्वन्वारोहेऽपि विशेषदार्ढ्यपरम्, जातिगुणादिनिमित्तत्वबहुरूढत्वपक्षेष्वपि हि समभिव्याहृतपदान्तरादेरर्थविशेषस्सिध्येत्। यद्वा मुख्यामुख्ययोस्तन्त्रेणानेकार्थत्वानुक्तिः। अमृतशब्देनैवकारेण च "तमेव विद्वानमृतः" इति, "तमेव विदित्वा" इति च वाक्यद्वयसूचनात् द्वयोरविरोधः ख्यापितः। ननु प्रत्यगात्मन्यपि "सोऽन्वेष्टव्यः" इत्यादिदर्शनात्, "नात्मा श्रुतेः" इत्यादौ तस्यापि निरूपयिष्यमाणत्वाच्च स एवेत्यवधारणमिहाशक्यम्, तदिद निगमनमुखेन व्युदस्यति—अत इति। शब्दशक्त्या [1]प्रस्तुतार्थस्वाभाव्याच्चेत्यर्थः। तदुभय सर्वेश्वर इत्यादिपदद्वयाभिप्रेतम्। जिज्ञासाकर्मभूतं जिज्ञासया प्राप्तुमिष्टतममित्यर्थः। प्रधानतया ह्यत्र जिज्ञास्यः परः। तद्भक्त्यारोहायाहग्रहोपास्तौ विशेषणतया बोद्धु च स्वात्मापि चिन्त्य। प्रजापतिवाक्यादिषु च प्रत्यगात्मज्ञान प्रकृतपरविद्यार्थतयैवोच्यत इति वक्ष्यते।

जिज्ञासापदस्थ सन अर्थविचार

सन् इहानिच्छार्थ इच्छार्थो वा? नाद्यः—"गुप्तिजिकिद्भ्यस्सन्" इत्यादावपाठात्। न द्वितीयः—विचारे विवक्षिते तदिच्छाभिधानविरोधात् सूत्रलक्षणविरोधात् उपचारायोगाच्च इति अत्राद्यमनभ्युगत्यान्त्य समर्थयितु विगृह्णाति—ज्ञातुमिति। ननु प्रत्ययार्थप्रधाने जिज्ञासापदे ज्ञानस्य निमग्नत्वान्न विधेयत्वम्, इच्छा तु न पुरुषतन्त्रा, न च सा स्वज्ञानजन्या, विषयानुकूल्यधीनिघ्नतया तदभावे तदनुपपत्तेरप्रतीयमानत्वाच्चेत्यत्राह—इच्छाया इति। स्वविषयसिद्ध्यर्थतया इच्छारूपक्रियायाः प्रोक्षणादेरिव स्वकर्मप्रधानत्व सिद्धम्। "धातोः कर्मणः" इत्यत्र च धात्वर्थस्य प्राधान्यमार्थं ग्राह्यम्, अप्राप्तमेव विधेयम्, अत इच्छावाचिना तत्सम्बन्धिविवक्षात्र न

---

१ प्रकृतार्थ पा (सु)

युक्तेति भाव । नहि ज्ञानमात्रं वाच्यम्, किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्र 'अतिक्रमति स्मर्यं गच्छति' इति नीत्या प्रत्युक्ति—इष्यमाणम् इति । सन्दिग्धसप्रयोजनविषयतया रागप्राप्त विचाररूपं ज्ञानं नोपासनादिवद्वैधमिति सूचनात्सार्थकः सन इत्याशयः । ज्ञानशब्दश्चार्वाचित्यात् उक्तविशेषपरः । रागविषयफलरूपज्ञानमुद्देन विचारोऽपक्रमिस्तु न युक्ता, धीविलम्बात्, विवक्षितस्य च साक्षाद्वक्तुशक्यत्वात् ।

इह मीमांसाख्यशास्त्रान्तरभागारम्भे । एवमेव हि "अथातो धर्मजिज्ञासा" इत्यादिष्वर्थानि भाव । ननु राग 'प्राप्ते विचारे 'कथं विधीयते' इत्युक्तिः नाप्यत्र गुरुभिगमनादिनियमाशापेक्षया विध्युक्तिः, न्यायानुपयोगात्, तात्पर्यनियमनिषेधेन पूर्वपक्षानुत्थानाच्च । मैवम्—'रागप्राप्तस्याप्यनारभ्यत्वभ्रमे तन्निषेधपरत्वादेव विधिशब्दस्य,

तत्रापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः ।
तन्निरस्युत्तरत्वेन युक्त्या सिद्धा व्युत्पत्तिपूर्वया ॥ २०७ ॥

मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्, उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः—"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति, वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्— संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः इति ।

१ पाम ।। ।।
२ न्यायपाम ।। ।।
३ ।। ।। ।।
९

अत्र 'तापत्रय' इति ग्रन्थे यादवप्रकाशोक्त पूर्ववृत्तान्तर साङ्ख्यादि-

मीमांसापदव्युत्पत्तिप्रदर्शनम्

विचारस्यानारभ्यतास्थापन च विवक्षितमिव [1]प्रतिभाति, तद्व्युदस्यन् वाक्यार्थमाह—**मीमांसा** इति। 'माङ् माने' इत्यत्र सन्नन्तत्वं निपात्य वा, 'मान पूजायाम्' इत्यत्र वा 'मान्बध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। "मानेर्जिज्ञासायाम्" इति वैयाकरणोक्तिस्त्वदूरविप्रकर्षात्, जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः। आहुश्च—"मीमांसासञ्ज्ञितस्तर्कस्सर्वो वेदसमुद्भवः" इत्यादि। तादृशन्यायनिबन्धात्मनि तु शास्त्रे भाक्तो मीमांसाशब्दः।

अत पूर्वापरभागविभागेन ज्ञातत्वावसेयत्वोक्तिरविरुद्धा। अत्र पूर्ववृत्तादित्यादिना वाक्ययोजना। शिष्ट तत्रत्यहेत्वंशसमर्थनम्।

विचारक्रमनिर्देशः सौत्रस्तद्व्यक्तये त्विह।
शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसहितौ ॥ २०८ ॥

पूर्वभागोपरितनभागशब्दाभ्या नियतक्रमव्याख्यानरूपप्रबन्धैक्य व्यज्यते। तन्निदान व्याख्येयस्य वेदस्य क्रमवत्त्व पदयोजनाया सशिरस्कशब्देन दर्शितम्। पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः। **ज्ञातस्य** निर्णीतस्य। **अवसेयस्य** अबाधितापातधीस्थतया निर्णेतव्यस्य। **ब्रह्मज्ञानस्य** ब्रह्मोपासनस्य। ब्रह्मस्वरूपमात्रविवक्षायामत्र ज्ञानशब्दाधिक्यात्, 'ज्ञातस्य कर्मणः' इत्येतत्समशीर्षतया साध्यविशेषग्रहणौचित्यात्, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्य अवसेयत्वोक्त्ययोगात्, निर्दिश्यमानफल प्रत्यचोदितत्वाच्च, तदिह समन्वयनीत्या स्वयमनन्ता-

१ भाति पा (क, ख, च)

क्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्यानन्ताक्षयफलसाधनत्वेन तद्विषयतयापि ज्ञातव्यमिति तदुपसर्जनतयोक्तिरपि सुसङ्गता । ब्रह्म ज्ञातव्यमित्यनेन तु तत्प्राधान्यं व्यज्यते । अत्र प्रयोजनवत्तयापातधीस्थत्वं विचार्यत्वे हेतुः । कर्मविचारात् पश्चाद्भावितस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वमानन्तर्यस्य च तादृशापेक्षणीयान्तराभावः । [1]अत श्रुत्युक्तनिर्वेदपूर्तिपर्यन्तविचारविशेषाभिप्रायेण तत एव इत्युक्तम् । अवधारणमिह हेतुवैकल्प्यनिवृत्त्यर्थम्, [2]सावधारणहेतुनिर्देशायोगात् । क्वचित्तु ' इत्यनन्तरब्रह्मविचारेऽनावश्यकत्वशूद्राधिकारत्वयोः प्रसङ्गात् कर्मधीर्व्यतिरिक्तहेत्वनादरोपदेशाय्यम " इत्याहुः । अत्र प्रधान [3]प्रतिज्ञा तद्धेतुः प्रतिज्ञानन्तरं हेतुश्च नास्ति स्यादिति वहनोचित्यम् । आकाङ्क्षितहेतुपूर्वकसाध्यविशेषायोगव्यवच्छित्त्यर्थत्वेन इत्यनन्तरादिनिगमस्तु युक्तः । ज्ञातव्यम् विचार्यमित्यर्थः । ' विचारः कर्तव्यः ' इति भाष्यते । अत्रार्हार्थे कृत्यप्रत्ययः । कर्मज्ञानादित्यत्रापि ज्ञानं विचारः ।

ब्रह्म ज्ञातव्यमित्युक्तं भवतीत्यनेन स्वारस्यं युक्तिं च सूचयता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं वदन्तः प्रत्युक्ताः । इदं हि सूत्रमविचार्यत्वनिरासार्थम् । ब्रह्मणो ज्ञातव्यत्वस्य इतः पूर्वमसिद्धतया तदेव ज्ञातव्यमिति नियमो नोदेति । कथं च शब्दानां सिद्धपरत्वमसम्भवमसाधयित्वा सिद्धविशेषस्य विचार्यत्वोक्तिः, समन्वयसम्भवात् तत्साधनम् । साकाङ्क्षे-

1 [illegible]
2 [illegible]
3 [illegible]
4 [illegible]

जना च न युक्ता । अत्र चोदनासूत्रवच्छब्दतोऽर्थतश्चायोगान्ययोगव्यवच्छेदौ वाक्यभेदाभावश्चेत्यप्ययुक्तम्, अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः, ब्रह्मश्रद्धावर्धकतया अन्यनिषेधः प्रस्तुतोपयोगी इति च मन्दम्, तत्प्रतिज्ञानेऽपि हेतुश्चावोद्यः, तदूहे तु ईक्षित्यधिकरणाद्यैस्तर्कपादान्तैस्साधनप्रासैः कृतकरत्वं च स्यात् । किं च शारीरकेऽनुक्ताशस्य साङ्ख्ययोगावगम्यत्वं वदद्भिः कथमिह तन्निषेधः प्रतिज्ञायते, वेदविरुद्धाशानादरणीयत्वं तु विरोधाधिकरणतः प्रागेव सिद्धम्, [1]अतो "ब्रह्म ज्ञातव्यमेवेति योजना युक्ता" इति वृद्धाः । अनेन श्रोतव्यादिश्रुतिरनुसृता भवति । अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्यापि द्रढयन् तन्मतानुसारे तत्कृतिसंवादं दर्शयति—तदाह इति । अनन्यथासिद्धपूर्वत्वविवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतम् । अधिगम्यतेऽनेनेति अधिगमोऽत्र विचारः । विविदिषोक्तिः जिज्ञासोक्तिवन्नेया ।

स्वोक्तसूत्रार्थसिद्ध्यै सूचितं शास्त्रैक्यमपि संवादयति—वक्ष्यति इति । व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः । ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्, किन्तु ऐकप्रबन्ध्यमपीत्यभिप्रायेण सहितत्वोक्तिः । अधीतकृत्स्नवेदार्थरूपविचार्यैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वात् नष्टाश्वदग्धरथन्यायेन सङ्घटितमित्यर्थः । इयं च वृत्तिः शास्त्रभेदभ्रमहेतून् तत्परिहारांश्च सूचयति, सर्वशरीरिगोचरत्वं दर्शयता शारीरकशब्देन विषयभेदज्ञापनात् । 'एतत्' इति प्रयोजनाधिकारिभेदयोरर्थविरोधस्फुरणस्य चाङ्गुल्यैव निर्देशात् । 'जैमिनीयेन' इति भेदशङ्काद्योतनम्, [2]परिहारस्तु 'षोडशलक्षणेन' इति द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन । अत्र

शास्त्रैक्यसमर्थनम्

---

१ अतोऽत्र पा (मु)

२ तत्परिहारस्तु पा. (मु)

अत. प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तर-मीमांसयोर्भेद.। मीमांसाशास्त्रम् "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्येवमन्त सङ्गतिविशेषेण विशिष्ट-क्रमम्।

ननु तर्हि तद्भेदप्रथा, सति वा भेदे कथ च प्रबन्धैक्यम् इत्यनवहि-तानुयोग द्वितीयवृत्त्यभिप्रेत व्यनक्ति—अत इति। सयुक्तिकसम्प्रदायादित्यर्थः। प्रतिपिपादयिषितत्वोक्त्या कर्मकाण्डदेवताधिकरणादेर्दैवतातत्त्वनिश्चयरहितानामपि 'कर्मप्राशस्त्यादिप्रतिपादनपरत्वेन विग्रहादिनिराकरणादौ तात्पर्याभावस्सूच्यते। उक्त ह्यागमप्रामाण्ये—"यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यास. कर्म-श्रद्धासंवर्धनाय इति। विवृत चैतद्भेदार्थसङ्ग्रहे—"अश्रुतवेदान्ताना कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृता." इति। अतिवादा अन्यपरोक्तय·। तत्रापि वाह्योक्तानित्यसयोगादिनिमित्तश्रुत्यप्रामाण्यशङ्कानिरासात् तत एव स्वाभीष्टमिद 'इत्याशय.।

अपि चैव नवमाद्यपादे—'फलदेवतयोश्च", "न चोदनातो हि ताद्गुण्यम्" इति प्रसक्तयोः फलदेवतयोर्मध्ये देवताविषयाणि "देवता वा प्रयोजयेत्" इत्यादीनि सूत्राणि यानि, तानि व्या-कुर्म.—देवतोद्देशेन देय द्रव्य देवता न प्रयोजयेत्, कुतः, कृष्यादिवत् फलसाधनभूतक्रियाया एव प्रयोजकत्वोपपत्तेः। तत्राह—"देवता वा प्रयोज-येदतिथिवद्भोजनस्य तदर्थत्वात्" इति। वाशब्दश्शङ्कानिवर्तक,

१ कर्मप्राशस्त्यप्रति पा, (सु, घ)

२ इत्यादय पा (क, घ) इत्येवमादय पा (ख)

हविरुद्देश्या देवता फलार्थिन स्वाराधने प्रयोजयेत्। कुत, भोजनस्य तदर्थत्वात्, भोजनस्य हविषः तत्समर्पणस्य च तदर्थत्वात् तच्छेषत्वात। सम्प्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते।

क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता।
तत्तन्मन्त्रादिसामर्थ्यादर्थप्राधान्यशालिनी ॥ २११ ॥

न च वाच्य *विग्रहादिपञ्चकायोगात् न प्रयोक्त्री देवतेति, स्मृत्युपचारान्यार्थदर्शनैरबाधितैस्तत्सिद्धेः। अतो यथा विग्रहादिमानतिथिराराध्य स्वार्थं स्वाभीष्टमुपचरण प्रयुङ्क्ते, तथा देवतापीति। †"आर्यपत्याच्च"—अर्थ्यते प्राप्यत इत्यर्थः विभूतिः, अर्थ्यत इति वा, अतस्तदभावादनाराध्या अनीप्सितप्रदत्वादप्रयोजिकेति न [1]शङ्कनीयम्, परा खलु देवता सर्वस्येष्टे, तन्नियुक्ता चापरा यथाधिकार तत्तद्विभूतीनाम्। तथापि निरपेक्षा देवता न कुतश्चित् प्रीयेत, न कञ्चन प्रीणाति, [2]अत कथ प्रयोजिकेत्यत्राह—"ततश्च तेन सम्बन्धः" ततः नैरपेक्ष्येऽपि नरदेवनीत्या। दयौदार्यशालिन्या. परिचर्यमाणायाः प्रसेदुष्या देवताया एव हेतोः परिचरता स्वाभीष्टफलेन सम्बन्धः स्मृत्युपचारादिभिरेव सिद्ध इति पूर्व. पक्षः। राद्धान्तस्तु—"अपि वा शब्द [3]पूर्वत्वाद्यज्ञकर्म प्रधान स्यात्"। अत्र 'अपि वा' इति साधाङ्गीकारे

---

* टि—विग्रहो हविरादान युगपत् कर्मसंनिधि। प्रीति फलप्रदत्व च येतत्पञ्चकमुच्यते ॥

† टि—"अर्थवत्त्वाच्च" इत्येव सर्वत्र मातृकासु उपलभ्यते, अय तु पाठ परा खलु देवता सर्वस्य ईष्टे इत्युपरितनवाक्यार्थस्वारस्यानुगुण्येन मीमासाभाष्यारूढत्वेन च आद्दत।

१ शङ्क्यम् पा. (सु)

२ तत पा (सु)

३ पूर्वकत्वात् पा (ख, घ)

..त्यावर्तनम। यद्यपि देवताया विग्रहादिपञ्चक दुर्निषेधम्, द्रव्याद्यपेक्षया प्रदानस्य प्राधान्य, यजेश्च देवताराधनवाचितया यागस्य तादर्थ्य, सिद्धपर-वाक्येषु च पगवद्देवतयो स्वरूपादिकमनन्यार्थमामनामः, तथापि कर्तव्योपदेशेषु यज्ञादिरूप कर्म स्वर्गादिफलसाधनतया चोदितत्वात् प्रधान सत् साध्यतया शुद्धयागेच्छेण पुरुष प्रवर्तयति, कृत्स्न च देवतादि क्रियाशेषभूतम्।

ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोश्रूयामहे, अत्राह—"गुणत्वे देवताश्रुतिः"। हविष्प्रदान प्रति गुणीभूता हि देवतामनुशृणुमः, ..यागाद्वादौरस्थायिन देवताप्रीतिरूपमपूर्व [1]चोदितस्य कर्मणः क्षणिकस्य कालान्तरभाविफलद्वारतया उपादीयेत, अतो वास्तवप्राधान्यशालिन्यपि देवता ..प्रवर्तकशाब्दप्राधान्याक्रियागुणीभूता न प्राधान्येन प्रयोजिकेति। अतिथ्यर्न्हि कथ प्रयोजकत्वम् इत्थमित्याह—"अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्"। आतिथ्य प्रत्यतिथेः प्रधानत्व प्राप्तम्, अन्यथा हि तस्य कर्मणि प्रयोजकाभावात् तदभावः स्यात्। तत्सपर्याविधिरेव तत्प्रयोजक इति चेत् तत्र प्रत्याह—* "तस्य प्रतिविधानत्वात्"। आतिथ्यकर्मणो हि अतिथ्यागमनप्रतिविधानतयैव चोदना।

क्रिया [2]प्रवृत्तपुरुषसमाहूता तु देवता।
सन्निधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता ॥ २१८ ॥

---

टि—इद "अपि वाशब्द" इत्यादिसूत्रशेषमखण्डतया पूर्वमीमांसायाम् उपलभ्यते, भाष्यचरणाना तु भिन्नसूत्रतया पाठ इति हृदयम्।

१ चोदितस्य क्षणिकस्य पा (क, ख, घ, च)

* इद पूर्वसूत्रशेषभूतम् अखण्डम्, "प्रीतिप्रधानत्वात्" इति पाठभेदो मीमांसा-भाष्यादावुपलभ्यते

२ प्रयुक्त पा (क, ख, घ, च)

अतिथिस्तु स्वयं प्राप्तः स्वामीष्टं च प्रयोजयेत् ।
तदिष्टानुविधानेन तत्पारार्थ्यचोदना ॥ २१३ ॥

अत प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिरिति । यथा चातिथेर्विग्रहादिमत्त्वे तत्परिचरणानुष्ठानस्य न कदाचित् क्षतिः प्रत्युत स्वरूपलाभ एव, एवं देवतायास्तद्वत्त्वेऽपि । न चात्र तत्प्रतिक्षेपसाफल्यं पश्यामः । गुणीभावसाधनेऽपि हि फलमिति चेत् अनिर्धारितवास्तवप्राधान्यानामपि कर्मश्रद्धासवर्धनमिति ।

एवं तावद्वेदेषु पूर्वपश्चिमपक्षयोः ।
देवताविग्रहादीनां प्रतिक्षेप्यत्वसूचनम् ॥ २१४ ॥

[illegible]
भाष्ये पूर्वपक्षोक्तदेवताविग्रहादिषु ।
स्वतःप्रामाण्यवेदिभ्यः स्वदते न निराकृतिः ॥ २१५ ॥

स्मृत्युपचारादन्यार्थदर्शनश्च स्वभाषितम् ।
न वाङ्मात्रेण निह्नोतुं शक्यते नास्तिकेतरैः ॥ २१६ ॥

अदर्शनकुतर्काभ्यां श्रुतार्थानामपह्नवे ।
चार्वाकादिमतापत्त्या सर्वोपप्लवसम्भवः ॥ २१७ ॥

श्रुतानां विग्रहादीनां [1]कल्प्यतोक्तिश्च मोहजा ।
श्रुतशक्त्यात्मभावस्य कल्पने गौरवं तु वः ॥ २१८ ॥

क्षणिकस्य फलद्वारं किं भवेदिति चिन्तने ।
द्वारकल्पनतो [2]ह्यत्र श्रुतद्वारपरिग्रहः ॥ २१९ ॥

१ कल्प्य अ पा (मु)

२ तत्र पा मु

देवताना क्रियार्थत्व कर्मणा च तदर्थता ।
मुखभेदेन सिद्धत्वान्न मिथो बाधमर्हतः ॥ २२० ॥

आदित्यादिमतीरङ्ग स्थापयन्बादरायणः ।
देवताना प्रधानत्वमर्थसिद्धमसूत्रयत् ॥ २२१ ॥

नासिद्धदेवतारूपदृष्टिश्चान्यत्र युज्यते ।
न च सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रमः ॥ २२२ ॥

देवताना तपश्चर्याद्युक्तिश्च न विरुध्यते ।
स्वाधिकेश्वरतोषार्थप्रवृत्तेरुपपत्तितः ॥ २२३ ॥

प्रशासितुश्च घृणया धर्मसस्थापनार्थिनः ।
तत्त [1]द्धर्मप्रवृत्तिस्स्यात्कर्मवश्यानु [2]सारिणः ॥ २२४ ॥

तिर्यक्स्थावरनिर्जीवतत्प्रतीकगुणक्रियाः ।
अभिमत्यनुबन्धेन देवतास्तदपि श्रुतम् ॥ २२५ ॥

हविर्भेदानुसारेण फलभेदप्रदायिता ।
प्रतिषिद्धैः प्रकोपश्च राजादिन्यायतो भवेत् ॥ २२६ ॥

यदि श्रुत्यनुसारेण स्वभावो हविरादिषु ।
तेनैव तत्तदाराध्यस्वभावस्वीक्रियोचिता ॥ २२७ ॥

---

१ त्कर्म पा (सु)
२ कारिण पा (क, ख, च)

मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते ।
तन्मूला स्मृतिरप्यत्र न बाधार्हा स्वमूलवत् ॥ २२८ ॥

पर्याये च विशिष्टे च देवताभेदकल्पनम् ।
तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ २२९ ॥

अविदित्वा स्वमन्दत्वं नास्तिकास्तिकेष्विह ।
येऽनादृयत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभिः ॥ २३० ॥

द्रव्यदेवतसामान्ये बलीयो द्रव्यमित्यपि ।
प्रत्यक्षे च परोक्षे च प्रमाणप्रस्थितेर्वशात् ॥ २३१ ॥

द्रव्यस्याध्यक्षसिद्धस्य हविष्ट्वं शास्त्रगोचरः ।
देवतायास्स्वरूपं च धर्मत्वं चेति भेदतः ॥ २३२ ॥

प्रत्यक्षाद्युपजीवित्वाच्छास्त्रतो दौर्बल्यम्बिना ।
ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥ २३३ ॥

द्रव्यदेवतयोरस्य न सत्यासत्यभावतः ।
देवता यदि मिथ्या स्यात्तस्य भेदादिधर्मभाक् ॥ २३४ ॥

अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकापि वा ।
यथाश्रुतगृहीता वा सत्यैव खलु देवता ॥ २३५ ॥

मणिमन्त्रौषधाद्यैश्च सिद्धिस्तत्राभ्युपेयते ।
अतस्सिद्धापि सार्थीना किं न देवेषु गृह्यते ॥ २३६ ॥

न वस्तुदेशान्तरयोर्देवदृष्टिविधानवत् ।
इह कल्पयितु युक्त स्वरूपविधिसौस्थ्यतः ॥ २३७ ॥

रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारत. ।
फलदाः फलभूतत्वादपि सिध्यन्ति देवताः ॥ २३८ ॥

इत्थ प्राचीनया गत्या क्षिप्त निर्दैवत मतम् ।
शेष तदुपरीत्यादिसूत्रभाष्ये भविष्यति ॥ २३९ ॥

द्रमिडभाष्यकारैप्युक्तम्—"[१]अञ्जसैव विश्वसृजो रूपम्" इत्यारभ्य, "न ह्यरूपाया देवताया रूपम्[२]उपदिश्यते, यथाभूतवादि हि शास्त्रम्" इति। नन्वर्थवादाना विधिशेषत्व पूर्वत्रोक्तम्, समन्वयाधिकरणे त्वन्यथा, तत्कथमविरोधः, इत्थम्—उत्सर्गापवादतः प्रवृत्तेः। दृष्ट चैतच्छास्त्रान्तरे काण्डान्तरे च। एवमन्यत्रापि कुदृष्टिकल्पितो विरोधश्शमयितव्यः। **षट्कभेदवत्** इति कर्मकाण्डे प्रतिबन्दी, **अध्यायभेदवत्** [३]इति तु काण्डत्रयेऽपि, चकारोऽत्रानुक्तपादादिभेद-समुच्चये। देवताकाण्डाच्छारीरकस्य पृथक्करण च तत्पृथक्करणप्रतिबन्धा [४]निरूढम्। अथ भिन्नक्रमत्वभिन्नप्रबन्धत्वव्युदास वृत्तिसिद्ध व्यनक्ति—**मीमांसाशास्त्रम्** इति। **सङ्गतिविशेषेण** हेतुहेतुमद्भावादिना सम्बन्धेनेत्यर्थः। "स च विंशतिलक्षण्यामेकप्रयोजनसाधनत्वेनैकप्रयत्नसाध्यत्वम्" इति विवरणम्।

---

१ अञ्जसेव पा (क, ख, घ) अजस्यैव पा (च)

२ उद्दिश्यते पा (क, ख, घ)

३ इति काण्ड पा (ख)

४ निरूद्धम् पा (ख)

इदं च [1] ऐकप्रबन्ध्यव्यक्त्यर्थम् । विशिष्टक्रमम्—नियतक्रमम्, न हि शास्त्रान्तरवदवसरमात्रादिह क्वापि क्रम इत्याशयः । तत्र विशेषः—

विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः ।
अतोऽनधीतवेदस्य विचारश्रुतिवारितः ॥ २४० ॥

क्रमो विंशतिलक्षण्या न वैधः किं तु यौक्तिकः ।
अतो व्युत्क्रमचिन्तायामनौचित्यं प्रकाश्यते ॥ २४१ ॥

'आरभ्य' इत्यनेन धर्मजिज्ञासामात्रे कृत्स्नवेदार्थविचारप्रतिज्ञा सूच्यते, धर्मशब्देन सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसङ्ग्रहात् । कर्मभागमात्रप्रतिज्ञापि तत्रैव तन्त्रेण आवृत्त्या वा सिध्येत् । तावतैव सारे कर्मविचारार्थत्वोक्तिः, भागद्वयप्रतिज्ञाभ्यां सामान्यप्रतिज्ञा गम्या; न्यायसूत्रे साधर्म्यवैधर्म्यसमोक्त्या प्रतिधर्मसमोक्तिवत् । तदेतत्सर्वं सङ्गतिमालायामुक्तम् । न च वाच्यम् आद्यप्रतिज्ञयैव कृत्स्नसिद्धौ किं भूयो विशेषप्रतिज्ञयेति, शङ्काविशेषोद्गारादिप्रयोजनवशात् प्राचीनाध्यायेष्विवात्रापि तदुपपत्तेः । सचायम् "अथातो धर्मजिज्ञासा" इत्यादिग्रन्थस्तात्पर्यं, यथान्यत्र सङ्गत्या क्रमनियतिस्तथात्रेति तात्पर्यात् । तत्र प्रमाणस्यानिरूप्यतया प्रमाणलक्षणेन प्रथमेनाभावि । कार्त्स्न्येन वेदस्य प्रामाण्ये सिद्धे तत्त्वेषु सदाभावेऽङ्गत्वादिस्मर्तव्यायोगात् मानचिन्तानन्तरं शास्त्रार्थचिन्ता प्राप्तेति शास्त्रभेदचिन्तैव के । तत्र शब्दान्तराभ्यासमसंख्यागुणप्रक्रियानाम [illegible] श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां शेषलक्षण

...पाणामत्र शेषिभिः प्रयोज्यत्वाय चतुर्थे क्रत्वर्थपुरुषार्थजिज्ञासा, ...पादानचिन्तेति केचित्। प्रयुक्तेषु श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डैः ... क्रमोऽनुक्रान्त। सक्रमे शास्त्रार्थे स्थापिते तत्प्रयोक्ता षष्ठे प्रोक्तः। ...निनिश्चये विकृतावतिदेशस्सामान्यतः सप्तमे स्थापितः। अष्टमेऽपि ...विशेष। अतिदिष्टमन्त्रादीना नवमे बहुविध ऊहः। अतिदेश... ...चित्प्रयोजनाभावादन्यतो वा तल्लाभात्प्रतिषेधतो वा दशमे बाधः। ...प्रयुक्तिशक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये चैकादशे तन्त्रम्। ...स्मिंश्चित्प्रयोगमध्यपातिन्यन्यस्मिंस्तत्प्रयोगोपजीविनि प्रसङ्ग इति। ... सङ्ग्रहः —

धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः।
मातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः॥" इति।

...त्र ...क्ते कर्मणि [2]सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव ...गुणप्रकर्ष [3]निरकृष्यत। तत्समाप्तौ च "अन्ते हरौ तद्दर्शनात्" "स ...गह हि "त ब्रह्मेत्याचक्षते त ब्रह्मेत्याचक्षते" इति विचारयिष्यमाण-मु... [4]निक्षिप इति तत्त्ववृद्धाः। ततोऽन्तिमे काण्डे सद्वारकमद्वारक च यथार्हं द्वादशलक्षण्युक्तसर्वधर्मसमाराध्यमनन्तरचतुर्लक्षण्यवधारितसर्वदैवतशरीरक पर

[1] विध्याक्षेप पा (च)
[2] सङ्कर्षण पा (मु, क)
[3] निराकृष्यत पा (मु, क)
[4] क्षिप्यन पा (मु)

देवत परीक्षितम् । तत्र सर्वेषां कारणवाक्यानामयोगान्ययोगव्यवच्छेदेन ब्रह्मणि समन्वय [1]प्रथमेऽध्याये प्रतिपाद्यते ; तदुक्तं न्यायसुदर्शने—

" व्युदस्याविषयत्वान्यविषयत्वे समन्वय ।
वाक्याना ब्रह्मणि प्राच्याध्यायेनेह [2]प्रदर्श्यते ॥ इति " ।

तत्र शङ्कितविरोधोद्धरणं [3]द्वितीयेऽध्याये , ताभ्यां स्थापिते ब्रह्मण्युत्पत्तिक्रमात्तृतीयचतुर्थाभ्यां साधनफलशोधनमिति विंशत्यध्याय्या विशिष्ट [4]क्रमत्व सिद्धमात्रम । हन्तैवमत्र कथं षोडशकचतुष्कपौर्वापर्यम् ;

कमबर्धा(प्रधारया पौ।र्पर्यनियम

व्युत्क्रमेऽपि हि न विरोध., वेदप्रामाण्यादिक तूपजीव्यमपि यथास्थान शारीरके निबन्द्धु शक्यम् , तावन्मात्र वा सश्रुत्य ब्रह्मचिन्ता स्यात , सैवम्—अस्ति ह्यनाद्यभ्यस्ते त्रिवर्गे कर्मकृत प्रथममादोषदर्शनादभिनिविशत इत्यर्थक्रम. । उभयत्र परिमितापरिमितफलापातप्रतीत्यविशेषेऽपि ' अर्के चेन्मधु विन्देत " इति न्यायात् कर्मसापेक्षविद्याप्रयासतो वा तदनपेक्ष्यनिर्धूतविकल्पतत्समफलकर्मचिन्ता प्रथममिति च यज्ञादिपदार्थसापेक्षश्च तदङ्गकवाक्यार्थधीबोध· । विद्याभेदेषु तत्र तत्र यज्ञतदवयवदृष्टिविधिविमर्शश्च दृष्टिविशेषणनिर्धारणापेक्षः । इष्टकचितादिदृष्टान्तधियश्च दार्ष्टान्तिकोपजीव्या । कर्मब्रह्मप्रचुरस्वाध्यायभागस्थानादिसम्प्रदायनियताध्य

1 प्रथमा पा म
2 [ट] पा व्या ' इति न्यायसुदर्शनस्थ पाठ आदृत , मातृकासु च ' प्राचा ' इत्येव ।
3 परीक्षि पा [ ]
4 द्वितीया पा [ ]
5 क्रम [ ] पा [ ] (ख, ग, घ)

यनमस्कारक्रमेण तद्विचारक्रमोऽपि युक्तः । स चात्र मुख्यक्रम एव, कर्मोपासना-रूपाङ्गाङ्ग्युत्पत्तिक्रमाच्च । तथा चोक्तं न्यायसुदर्शने—

'कर्मविज्ञानयोर्हेतुहेतुमद्भावसंमतेः ।
प्राग्भावः कर्मणः सिध्येत् पश्चाद्भावोऽपरस्य च ॥

तयोश्च क्रमवत्त्वेन तद्विचारौ च तादृशौ ।
मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥

यथा 'सारस्वतौ भवत एतद्वै दैव्यं मिथुनम्' इत्यत्र युगलोत्पन्ने यागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे [1]तत्क्रमेण [2]तदङ्गानामेव प्राथम्यमुक्तम्—'मुख्यक्रमेण वाङ्गानां तदर्थत्वात्' इति" ।

पूर्वकाण्डप्रसिद्धानां न्यायानामिह सङ्ग्रहात् ।
ब्रह्मकाण्डो वृथेत्येतत्प्राच्याध्यायेष्वपि स्मर ॥ २४२ ॥

शारीरकशास्त्रस्य सार्थत्वम्

व्युत्पादनमपूर्वाणामाक्षिप्य स्थापनं तथा ।
अपवादः क्वचिच्चेति सार्थत्वमिह च स्थितम् ॥ २४३ ॥

ननु यदि "अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात्" इत्यन्ता मीमांसा ; तदा शारीरकस्य विरक्ताधिकारत्वस्वीकारात्, तत्र निर्दोषानन्तफलनिश्चयाच्च न [3]स्वर्गादिफलसाधनानुष्ठाता कश्चित्सिध्येत्, ततश्च काम्यविधीनामननुष्ठानलक्षणम-

---

१ तत्क्रमेणैव पा (सु)
२ तदङ्गानाम् पा (सु)
३ स्वर्गादिसाधन पा (क, ख, च)

प्रामाण्य स्यात्, मैवम्—मोहाद्विभ्रमाद्वा यः कर्ममात्रं विचार्य विश्रान्तः, यश्च ख्याति-लाभपूजाप्रवचनादिमात्रकामस्त्रय्यन्तार्थं चिन्तयेत्, यो वा पश्चान्नियतिवशान्निवृत्तवैराग्यः, ते श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युः।

पण्डितोऽप्यातुरः कश्चिदपथ्येषु प्रवर्तते।
निषिद्धेष्वपि किं नैव काम्य प्राज्ञेऽपि सम्भवेत्॥ २४४॥

कथ्यन्ते च महान्तोऽपि कामादुभयभावनाः।
क्रममुक्तिश्च केषाचित् तत एवाभिधीयते॥ २४५॥

**तथाहि—प्रथम तावत् "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते।**

अध्ययनविधि

प्रकृतस्यैकशास्त्र्यस्य ब्रह्मचिन्तोद्यमस्य च।
क्रमादेश्चोपपत्त्यर्थं तथाहीत्यादि भाष्यते॥ २४६॥

अत्र कर्मविचारात्प्रागपि ब्रह्मविचारस्स्यादिति पश्यन् किमध्ययनादपि तस्य पूर्वत्वमिच्छति, उताधीतवेदस्य कर्मनिरूपणात् प्राच्यत्वमिति विकल्प हृदि निधाय आद्य दूषयति—**प्रथमम्** इति। "तावच्छब्दोऽध्ययनानन्तर्यस्य सर्वसम्मतिं दर्शयति" इति विवरणम्। एतेन विचारस्याध्ययनानन्तरभावित्ववद्ब्याख्येयस्यैकविधिसिद्धाध्ययनसंस्कारगोचरनियतक्रमैकप्रबन्धत्वम्, अध्ययनस्य विधिबलात्कृत्स्नस्वाध्यायविषयत्व, तत एव तद्विचारस्य तथात्व च यथावत्कर्मब्रह्मचिन्तकैस्सर्वैः दुस्त्यजमिति व्यज्यते। अवधारणार्थो वा तावच्छब्दः। तेन चाष्टवर्षाद्युपनीतस्यानन्तर शौचाचारशिक्षणपूर्वकेण नियतेनाध्ययनेन शास्त्रान्तरावसरनिरोधात् तन्मूलत्वेन सम्भावनीयसाधनचतुष्टयादिपूर्ववृत्तान्तरनिरास।

स्वाध्यायोऽध्येतव्यः" इति स्वविधिं गृह्णता तत्प्रयुक्तिः[1]रभिप्रेता। अध्ययनेनाक्षरराशिग्रहणम् इत्यनेन सरकारलाभस्सूचितः। एवकार इह नियमस्य फलितत्वं द्योतयति। यद्यप्यकरणे प्रत्यवायान्निमित्तादृष्टेश्च नित्योऽयमध्ययनविधिः, तथापि दृष्टस्य फलस्यापरित्याज्यतया तत्स्वीकारार्थादध्ययनादक्षरराशिग्रहणे सत्यन्यस्य ग्रहणहेतोर्नात्रावकाशः। अध्ययनस्य नियोगार्थत्वं वदतापि ह्यर्थात्पुस्तकपाठादि प्रतिषेध्यम्, अत एव हि लिखितपाठकनिन्दापि। स्वाध्यायशब्दवाच्य इत्यादिभिस्त्रिभिः स्वशाखैकदेशमात्रं वा शाखान्तरं वा विचार्यो वेदार्थो वा न स्वाध्यायशब्दवाच्य इति व्यज्यते, यथाक्रमाध्ययनं परम्पराप्राप्तं विध्यनुमतमिति च भावः। ग्रहणं विधीयते फलत्वेन बोध्यते सम्भवदुपायान्तरं फलमिदमुपायविशेषतो नियम्यत इत्यर्थः, यत एवकारस्ततोऽन्यत्र हि नियमः। यद्यप्यक्षरग्रहणस्यान्यतोऽपि शक्यत्वान्न स्वरूपतो नियमः, तथापि जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमोपपत्तिः। अर्थज्ञाने नियमं वदतामप्येवमेव निस्तारः।

तच्चाध्ययनं किंरूपम्? कथं च कर्तव्यमित्यपेक्षायाम् "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेत्" इत्यनेन,

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्" ॥

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते।

१ रप्यभिप्रेता पा (च), रित्य पा (क, घ)

नन्वध्ययनविधिना स्वाध्यायस्याध्येतव्यत्वमात्रं प्रतीयते। न तावता साधन[१]चतुष्टयसपत्त्यादिहेतुभूतशास्त्रान्तरावसरनिरोधः, ततः पश्चादप्यध्ययनोपपत्तेः। निरङ्ग वा सकृदधीत्य वा शास्त्रान्तरमभ्यस्यतामित्यत्राध्ययनस्वरूपकालाधिकार्यादिक व्यनक्ति—**तदिति**, सर्वसमतनित्यविधिसिद्धमाद्याध्ययनमित्यर्थः। **किंरूप**—किं जपादिवत्स्वतन्त्रोच्चारणम्, उतानूच्चारणम्, किं वापन्यायमूलं गौडाध्ययनवत्, पारायणवच्चानावृत्तम्, उतावघातवच्चावृत्तमित्यर्थः। "रूपशब्देन फलग्रहणम्" इति तूलिकाया अपि यावद्ग्रहणमावृत्त[२]रूपत्वे तात्पर्यम्। **कथम्** इति इतिकर्तव्यतापरम्। अध्यापनार्थशङ्कार्हस्योपबृहणीयस्य अध्ययनार्थतया सम्प्रतिपन्नानामुपबृहणाना च [३]विशेषमैकरस्यावश्यम्भाव चाभिप्रेत्य "**अनेनोपदेशैश्च**" इति विभज्य निर्देशः। 'उपाकृत्याधीयीत' इत्येतत्, 'उपनीतोऽधीयीत' इति श्रुतितात्पर्यकृतेः स्थापकम्। उपनीतस्य ह्यध्ययनार्थतयोपाकर्मादि निर्दिश्यते। **युक्तः**—[४]अवहितः, व्रतादियुक्तो वा, अर्धं पञ्चमं येषा ते **अर्धपञ्चमाः**। आदिशब्देन

"अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सपठेत्॥"

इत्यादीनि प्रागुक्तसाङ्गाध्ययनानुगुणवचनानि गृह्यन्ते। व्रतविशेषाः सोपाकृतयः प्राजापत्यसौम्यादयः। नियमविशेषाः शुक्लकृष्णपक्षार्धपञ्चम-

१ चतुष्टयादिहेतु पा (मु)

२ रूपवत्त्वात् पा (क, घ, सु)

३ विषमैकरस्य पा (सु)

४ स्थित पा (सु, ख, घ)

[illegible] हि दृष्टस्य [1]सुखादन्यस्याप्यर्थज्ञानादेरिव सुखादिपर्यवसानात्फलत्वं [illegible] । नदेवम् 'अनूच्चारणम्, अक्षरराशिग्रहणफलम्' इत्युभाभ्यां [illegible]मिति बुभुत्सितमाद्याध्ययनभावार्थस्वरूप प्रदर्शितम् । तथाच विवरणम्— [illegible]वच्छिन्नक्रियाक्षणनिचये हि धातोर्वृत्तिः, यथा ओदन पचतीति , [illegible] वर्तमाननिर्देशभङ्गप्रसङ्गात् , प्रारब्धोऽपरिसमाप्तो हि वर्तमानशब्दार्थः । [illegible]न्यास्तु क्रियाया धात्वर्थत्वे शब्दप्रयोगात्पूर्वमेव ज्ञातस्य क्रियाक्षणस्य नष्टत्वा- [illegible] च भविष्यत्त्वात्समकालस्याज्ञाततया शब्दाविषयत्वाच्चाक्षुषत्वेऽपि क्षणध्व- [illegible]न्त्यान्तानिरूपणाच्च न प्रारम्भापरिसमाप्त्योः सिद्धिरित्यतो ग्रहणफला- [illegible]न्नक्रियाक्षणनिचयेऽध्ययनशब्दस्य वृत्तिरित्याह" इति । अध्ययनस्याचार्यो- पनात[2]कर्तृकानूच्चारणत्वोक्तिः "उपनयीत, तमध्यापयेत्" इत्युभाभ्यामा- चार्यकर्तृकोपनयनादिपूर्वकत्व विधीयत इति व्यनक्ति ।

ननु "अध्यापयेत्" इति वृत्त्युपाय[3]नियमार्थत्व स्यात् । मैवम्—

उपनयनस्य अध्य- अनुपनेतुरपि तदर्थाध्यापनदृष्टेरुपनयनविधानैरर्थक्यात् । नाप्यु-

यनाङ्गत्वम् । पनीतमेवाध्यापयेदिति [4]क्रमनियमोऽपि, तथाप्यष्टवर्षं ब्राह्मणमि- त्यादेरनपेक्षितवचनत्वप्रसङ्गात् । अन्यार्थमिह तदुपदेशस्त्वसङ्गत एव । न चात्र उपनीतौ नियमः शङ्क्यः, [5]तत्प्रापकान्तरादृष्टेः । स्मृतिर्दृश्यत इति चेन्न, अष्टवर्षा- द्युक्तेरनुपयोगादेव । न चात्र वृत्त्युपायद्वयोक्तिः, उपनयनस्य तदुपायत्वेनापरिसं-

---

१ सुखाद्य पा (क, ख, च)

२ कर्तृकानूच्चारणोक्ति पा (सु)

३ नियमार्थं पा (सु)

४ कर्म पा (सु, क, च)

५ प्रापक पा (सु)

ख्यानात्। तथात्वेऽपि प्रापकाभावेन नियमानुपपत्तिरुक्तैव, [1]दत्तोत्तरत्वाच्च। अतोऽध्ययनापेक्षितविधिरेवायम्। प्रयोजके चात्र विधिः "याजयेत्" इतिवत्स्यात्, अध्यापनमपि हि याजनवद्वृत्त्यर्थतया प्राप्तत्वान्न विधेयम्। तदत्र 'अष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकाम उक्तप्रकाराचार्योपनीतस्तदुपगत्या यथोक्तव्रतनियमवानधीयीत' इति सोपबृंहणाद्याध्ययनशास्त्रार्थस्थापना। अत एव अध्ययनविधौ नियोज्याश्रवणादन्यप्रयुक्तानुष्ठानत्वक्लृप्तिरयुक्ता, अध्यापनविधावप्यश्रवणाच्च। क्लृप्तेश्चोभयत्राविशेषात्। न चेह तत्क्लृप्तिः, ब्राह्मणमित्यादेः प्रजाकामादिवद्विभक्तिविपरिणाममात्रेण तत्सिद्धेः।* 'विप्रोऽधीयीत' इति स्मृत्यनुग्रहाच्च। बालस्य स्वाधिकाराज्ञानान्न स्वविधिप्रयुक्तिरिति चेन्न, निषादस्थपतिन्यायादन्यैस्तदभिज्ञैरनुष्ठानोपपत्तेः, हितैषिण एव हि बालादीनामविदितस्वाधिकाराणा जातकर्मादिसंस्कारानपि स्वयविदितोपयोगाः कुर्वन्ति। अध्ययने तु बालस्याप्याप्तप्रेरणादिभिः साफल्यानुमानात्प्रवृत्तिर्युक्ता।

नित्यमध्ययन काम्यप्रयुक्तमितिवादिनाम्।
कथ तत्र नियोगस्य कृत्युद्देश्यत्वलक्षणम्॥ २४९॥

प्रबुद्धाना स्वविधिनाऽबुद्धानामन्यतरित्वति।
प्रयुक्तिभेदक्लृप्तौ च स्यादर्धजरतीयता॥ २५०॥

---

१ 'दत्तोत्तरत्वाच्च' इति पाठ (सु) कोशे नदृश्यते

* टि—अत्र, 'अत पर प्रबुद्धम् इत्यारभ्य भगवन्तम् इत्यन्तम्' इति (घ) कोशे, 'अत पर लक्षण प्रबुद्धम् इत्यारभ्य भगवन्तम् इत्यन्तम्' इति (सु, स) कोशयोश्चोपलभ्यते। इतरकोशेषु इय पङ्क्ति नोपलभ्यते।

यच्च "निस्तीर्णाध्ययनदुःखे माणवके विचारात्पूर्वमध्ययनविधेरधिकारपर्यव-सानाय दृष्टमर्थज्ञान विषयसाध्यप्रयोजनतया स्वीक्रियते" इति, तदपि मन्दम, अध्ययनस्यान्यत. सिद्धौ तदप्रयोजकेन सिध्यता कार्येण तस्य प्रयोज-नान्तराकृतेरयोगात्। नित्यान्तरवदस्यापि ते नियोगमात्रप्रयोजनत्वोपपत्तेः। दृष्टत्वा-दन्यदप्यनुज्ञातमितिचेन्न, आनुषङ्गिकस्य लाभपूजादेरत्र विध्यनुज्ञातत्वेन स्वी-कारप्रसङ्गात्। न च धर्मानुष्ठानोपयुक्ततयार्थज्ञानमेव विधिरनुजानाति, नान्य-दितिवाच्यम्, धनादेरपि तदुपयुक्तत्वेन तस्याप्यनुमतिप्राप्तेः।

सर्वविध्युपकारित्वम् [1]अर्थज्ञानस्य सभवेत्।
नैतावता विशेषेण दृष्टमन्यदुपेक्ष्यते॥ २५१॥

धनादेरुपकर्तृत्व स्वशक्त्यैवेति चेन्मतम्।
अर्थज्ञान च तद्वत्स्यान्न [2]विधिभ्रूवशवदम्॥ २५२॥

[3]अर्थतस्तदनुज्ञात शब्दशक्त्यैव भावितम्।
सापेक्षैर्यागदानादिनियोगैरुपजीव्यताम्॥ २५३॥

अपि चैकस्य वैरूप्य विध्यनुज्ञात्मकत्वतः।
प्रधानगुणकर्मत्वविषये च प्रसज्यते॥ २५४॥

तस्मादध्ययनारम्भवेलायामेव माणवकस्य हितमाचार्यादयोऽभिसन्धाय परबुद्धैरुपदिश्य वा तत्र प्रवर्तका इति युष्मद्ग्रामेष्वपि वृत्तान्तः। न पुनरन्यस्या

---

१ धर्म पा (ङ)

२ विधिष्वीदृश पदम् (ख)

३ अतस्तदननु पा (क, ख, च)

चार्यक मया भावनीयमिति बुद्ध्या कश्चित्प्रवर्तमानो दृश्यते, शिक्षयन्तश्च हितैषिणो बालस्यैवागामि फल व्यपदिशन्ति । छान्दोग्ये च—"ब्रह्मचर्यं भगवति [1]वत्स्याम्युपेया भगवन्तम्" इति जाबालो गौतममाह, तेन च प्रत्युक्तम्—"समिध सोम्याहर । उप त्वा नेष्ये" इत्यादि, अतः शिष्यार्थमेवाचार्यः प्रवर्तते, ततस्तु वरादिक तेन प्राप्यमिति सिद्धम् । अत एव द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्ययनमिति यत्कैश्चिदुक्त तत्स्वविधिप्रयुक्त्यसम्भवेऽप्यध्यापनविधिप्रयुक्तिस्तावदयुक्तेति स्थापयितुम् । नहि माणवकस्य प्रयोजनमबोधयित्वा तत्प्रवर्तनतन्मूलद्रव्यार्जनादिसम्भवः, अन्यथा हठात्प्रवृत्तिराचार्यस्य स्यात् । अतः साङ्गाध्ययनविधौ कण्ठोक्तो विप्रादिः [2]स्वहिताभिसन्धिकर्तेति नान्यतः प्रयुक्तिः । एतेन आचार्यकरणविधिप्रयुक्त्यनङ्गीकारे क्रतुविधिप्रयुक्तेः [3]अवश्याश्रयणीयतया तत्तत्फलकामशूद्रादेरप्यध्ययनाधिकारः स्यादिति कैश्चिदुक्त निरस्तम् । आधानवन्नियतकर्तृकेण स्वविधिनैव अध्ययनस्य प्रयुक्तेः, अध्ययनविधावधिकाराश्रवणचोद्यमपि वैतुष्यवद्दृष्टस्याक्षरग्रहणस्य फलत्वोक्त्या प्रत्युक्तम् । उपनीयेत्यादि[4]स्मृतिरपि नाध्यापन विधत्ते, नाप्याचार्यक तत्फलत्वेनोपादत्ते, अन्यतः प्राप्तविशिष्टाध्यापनानुवादेनाचार्यशब्दव्युत्पादनपरत्वात् उपाध्यायादिशब्दव्युत्पादनवत्, न ह्यत्र तदतिरिक्ततात्पर्यक्लृप्तिहेतुः । नच आचार्यकमेकमन्यादृशम्, मानाभावात्, निमित्तान्तरादृष्ट्या तत्क्लृप्तिरिति चेन्न—[5]सनियमकोपनयनाध्यापनात्यन्तायोगव्यवच्छेदमेलकस्य निमित्तस्य दृष्टेः ।

---

१ विवत्स्याम्यभ्युपेयाम् पा (क, ख, घ)

२ स्वविहिताभि पा (छ, ख, घ, च)

३ अप्यव पा (छ)

४ श्रुति पा (छ)

५ सम पा (छ),

अत एव उपनयनादेरुत्तरकालेऽप्युपाध्यायादिनयादाचार्यशब्दप्रयोगोपपत्तिः । पूर्वं त्वनागतावेक्षणस्य दुश्शकतया निमित्तज्ञानसन्देहाभ्यामप्रयोगः । अपि च स्मृतेरत्र शब्दव्युत्पादनमात्रपरत्वे वृद्धव्यवहार एव मूल दृष्टम्, आचार्यकरण-विध्यर्थत्वे तु अलौकिकार्थश्रुतिमूलत्व कल्प्यम्, कॢप्त[१]कल्प्ययोश्च विरोधे कॢप्तमेव ग्राह्यम् । त्वादिश्रुतिश्चात्र "दर्शपूर्णमासाभ्यामिष्ट्वा" [२]इत्यादिवदनङ्गत्वेऽपि सूत्रोक्त-समानकर्तृकत्वादिसाधर्म्यमात्रेण घटते ।

ननु समानकर्तृकत्वस्वारस्याद्बाधकाभावाच्चैकप्रयोगतयाङ्गाङ्गित्वसिद्धिः स्यात्, तन्न—

त्वाश्रुतेः स्मृतिसस्थत्वादनुवादतयापि च ।
श्रुतिस्थ लिङ्गमेवात्र बलीयो ह्यविलम्बतः ॥ २५५ ॥

ब्राह्मणमिति माणवकैकसस्कारतया श्रुतमुपनयन प्रयोज्यप्रयोजकव्यापार-तयाध्ययनाध्यापनयोर्द्वयोः फलवतो· सन्निधावपि कर्मस्थतया अन्तरङ्गलिङ्गादुपनीत-[३]गताध्ययनाङ्गमेव, अन्यार्थत्वे तु प्रणाड्या स्यात् । एव श्रौतलिङ्गतोऽध्ययने विनियुक्तस्याध्यापनाङ्गत्वकॢप्तौ विनियुक्तविनियोगविरोधः, न हि स्मृतिस्था त्वाश्रुतिः श्रौत लिङ्ग बाधितु क्षमा । स्मृतिः स्वमूलम्, अनूक्तिः पुरोक्तिमपेक्षत इति विलम्बद्वयेन प्रतिरोधात् ।

---

१ कल्प्यवि पा (स्रु)
२ इतिवद पा (ख)
३ गताध्यापन पा (स्रु)

उपनयीतेत्यात्मनेपदस्य न कर्त्रभिप्रायनिमित्तकत्वम्

ननु "स्वरित" इत्यादिविहितादात्मनेपदादुपनयनमुपनेतृगताध्यापनाङ्ग स्यात्। न स्यात्, सम्माननादिसूत्रविहितत्वात्, अकर्त्रभिप्रायार्थोऽयमारम्भ इति शाब्दाः। कर्तर्येव फलान्वयः कर्त्रभिप्रायत्वम्, अकर्त्रभिप्रायत्व तु नियमाभाव इति चेन्न—"आदधीत" इत्यत्र "स्वरित" इत्यादिसूत्रोक्तात्मनेपदेऽपि फलस्योभयान्वयात्। न च क्रियाफलस्य चेतन[1]द्वयेऽनन्वयस्तत्, "जायापती अग्निमादधीयाताम्" इत्यत्रापि तद्दृष्टे.। कर्तृव्यतिरिक्तचेतनेऽनन्वयस्तदित्यपि निरस्तम्। प्रामाणिकदृष्ट्या [2]सर्वेषु शास्त्रार्थेषु अकर्तर्याराध्ये प्रीतिरूपफलश्रुतेराराधनादिष्वात्मनेपदलोपप्रसङ्गात्, "अभिचरन्यजेत" इत्यादौ भ्रातृव्येऽपि तदुचितफलसम्मतेश्च। "ऋत्विजो वृणीते" इत्यत्र च वरणीयेष्वपि फल सिद्धम्। अव्यवहितफलस्य क्रियाफलशब्देन विवक्षितत्वात्तस्य कर्त्रन्वयः कर्त्रभिप्रायत्वम्। सम्माननादिसूत्र तु व्यवहितफलस्य कर्त्रन्वयार्थं स्यादित्येतदपि दत्तोत्तरम्, "आदधीत" इत्यादावेव व्यभिचारात्। अस्ति [3]हि अत्राग्निसस्कारव्यवहितमाधातर्याहिताग्नित्व फलम्। ननु आगामिनित्यकाम्यादियागोपजीव्यसस्कृताग्निसिद्धिरेवाधातुः फलमिति न व्यवहितफलान्वयः। मैवम्, अत्राप्युपनयनसस्कृताध्येतृसिद्धिरेवोपनेतुः फलमिति सम्माननादिसूत्रवैयर्थ्यप्रसङ्गात्। अव्यबहितफलस्य कर्त्रभिमतत्वानभिमतत्वाभ्या[4] सूत्रद्वयसाफल्यमिति चेन्न—आचार्यकार्थिनोऽप्युपनेतुरुपनेयसस्कारानभिमतत्वयोगात्। अतः कर्त्रन्वय-

---

१ द्वयेनाभन्वय पा (सु)

२ सर्वेष्वेव पा (सु)

३ हि अग्नि पा (सु)

४ सूत्रद्वयस्य पा (सु).

[1]सिद्धमेवात्मनेपदम् । एवमध्यापयेदित्यनेनापि न फलस्य कर्तृगामित्वम् । तदेव न विध्यन्तरप्रयुक्तमध्ययनम् ।

विचारस्य अध्ययनाध्यापनविधिप्रयुक्तत्वनिरासः

विचारश्च किमध्ययनविधिना प्रयुज्यते, उत अध्यापनविधिना, न प्रथमः—विषय[2]फलानुज्ञाया निरस्तत्वात् । न द्वितीयः, यावच्छ्रुतानतिक्रमणात् ।

स्वाध्याय ग्राहयित्वा हि गुरुणापि विरम्यताम् ।
दयादिप्रेरितत्वे तु प्रागप्येवमिति स्थितिः ॥ २५६ ॥

अतो गुरुमते कृत्स्नमीमांसैव न सिध्यति ।
इति मत्वा विधूत तत्प्रकृतस्थापनार्थिभिः ॥ २५७ ॥

**अध्ययनं च स्वाध्यायसंस्कारः । "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात् ।**

यद्यप्येवमक्षरग्रहणावधि शास्त्रान्तरावसरो निरुद्धः, तथापि गृहीताक्षरस्यासौ स्यादिति शङ्कायामुत्तरत्रापि तन्निरोधार्थमध्ययनस्य नियोगविषयत्वपक्षप्रतिक्षेपेण प्राक्सूचित स्वाध्यायसस्कारत्व व्यनक्ति—[3]अध्ययनम्

स्वाध्यायस्य अध्ययनकर्मत्वम् ।

इति । चः शङ्कानिवृत्त्यर्थः, यद्वा भिन्नक्रमः, [4]असकृदनूच्चारणत्वादिना सह सस्काररूपत्वस्य समुच्चयार्थः ।

---

१ सिद्धयर्थम् पा (सु)
२ फलानुज्ञया पा (सु)
३ अध्ययन चेति पा (सु)
४ सकृदुच्चा पा (क, च, घ, सु)

"संस्कारः पुंस एवेष्टो [1]मन्त्रणप्रोक्षणादिभिः" इति वदद्भिरध्ययन-संस्कारोऽपि कर्तुरेवेति स्वीकृतः। तेन विवक्षितासिद्धिरिति शङ्कां निवर्तयितु-माह—**स्वाध्याय इति**। उक्तं च बृहट्टीकायाम्—

"संस्कार[2]गणनायां च युक्तैवाक्षरसंक्रिया।
स्वाध्यायो हि स्फुटं कर्म साक्षात्संक्रियते हि सः"॥ इति।

पुरुषातिशयाधानं प्रोक्षणाद्यैश्च ये विदुः।
तेऽपि संस्कारकर्मत्वं तत्र तत्र न तत्यजुः॥ २५८॥

[3]तत्कर्मकक्रियाजन्यः संस्कारः पुरुषाश्रयः।
तत्तत्सहकृतं कार्यं करोतीत्यवधारणात्॥ २५९॥

[4]अत्राध्ययनस्य स्वाध्यायसंस्कारत्वे कर्मत्वं हेतुरिति न वैयधिकरण्यम्। अयं भावः—अत्र हि तव्यप्रत्ययस्यार्थान्तरं न घटते, ततश्च द्वितीयाश्रुतेस्तव्यादेर्वा कर्मार्थत्वे विशेषाभावात्कारकाणां क्रियार्थत्वेऽपि द्रव्यनिष्ठस्य भावार्थस्य द्रव्यार्थत्वा-दवहन्त्यादिनयोऽत्र युक्त इति। सिद्धं चावहन्त्यादेः [5]तत्तद्द्रव्यस्य संस्कारत्वं भेदलक्षणे "तानि द्वैधं गुणप्रधानभूतानि" इति। **स्वाध्यायस्य इत्यनेन** निर्वर्त्यत्वाद्यनुपपत्तिः सूचिता, न खल्वसौ निर्वर्त्यः, अनादिसिद्धक्रमत्वात्,

---

१ मन्त्रेण पा (सु)
२ गणनानाम् पा (ख, सु, क, च)
३ तत्तत्कर्म पा (सु).
४ अध्ययनस्य पा (सु)
५ तत्तद्द्रव्यसंस्का पा (च)

यथापूर्वोच्चारणे वाक्यनिर्माणव्यवहाराभावाच्च, नापि विकार्यः, दुग्धदध्यादिवदन्यथाभावादृष्टेः; नापि प्राप्यत्वमात्ररूपः, उपयोगान्तरवत्त्वे तदयोगात्, अतः परिशेषसहकृतकर्मत्वावगतिः संस्कार्यत्वे हेतुरिति।

**संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्, संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च॥**

ननु कर्मत्वावगमेऽपि श्रुत्यादिभिरविनियुक्तस्याद्रव्यस्य स्वाध्यायस्य कथं संस्कार्यत्वमित्यत्राह—संस्कार इति। हिः प्रसिद्धौ। नामशब्दः परसम्मतिपर्यन्ते तत्प्रकर्षे; स्वाध्यायसम्भावितभाव्युपयोगिसंस्काराभिप्रायेणात्र कार्यान्तरयोग्यताकरणोक्तिः। यद्वा कस्यचित्सतोऽतिशयाधानं संस्कार इति लक्षणमत्र विवक्षितम्। ततश्च भूतोपयोगिन्यपि तदनुगुणोपयोग[1]विवक्षया कार्यान्तरयोग्यताशब्दः कथञ्चिद्योज्यः। प्रहृता अपि परिधयः तेनैव रूपेण भूतोपकाररूपकार्यान्तरयोग्याः श्रूयन्ते। अयं भावः—न तावदविनियुक्तत्वादसंस्कार्यत्वम्, विनियोगाभावेऽप्युपयोगदृष्ट्यैव संस्कार्यत्वसम्भवात्। अस्ति च "ऋग्वेदेन होतं करोति" इत्यादिभिः सामान्यतो विशेषतश्च विनियोगः। नाप्यद्रव्यत्वादसंस्कार्यत्वम्; यथोक्ताध्ययनगृहीतत्वे विरोधाभावात्। ग्रहणविषयत्वादेश्च गुणादावपि सर्वसम्मतेः। चोदितक्रियासाध्यस्येश्वरानुग्रहरूपस्यातिशयस्य स्वाध्यायधारत्वाभावेऽप्यध्ययनप्राप्ततया आराध्यबुद्धिसंगृहीतेन तेनैव यथार्होत्तरक्रियाय शास्त्रतो नियमान्नातिप्रसङ्गः। व्रीह्यादिष्वपि प्रोक्षणादिभिरतीन्द्रियातिशय

---

१ विवक्षयात्र पा (सु)

दिषन्ति" इत्यत्र वेदनलक्षणा च पदान्तरविमर्शापेक्षिणी वाक्यकक्ष्यानिवेशाद्वि-प्रकृष्टा। श्रुतिस्तु प्रथमकक्ष्याया स्थितेति भावः।

समुच्चयवदेवात्र विकल्पोऽपि न कर्मणः।
शमाद्यैरव्यवहितैरसाम्यादिति मन्यते ॥ २८७ ॥

[1]भूत्वेति त्वाश्रुतेरेषा साक्षादङ्गत्वमीयते।
हित्वा विविदिषादीना कल्प्यमन्यत्तु कर्मणः ॥ २८८ ॥

[2]दान्तः—विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः। "मनसो दमन दमः" इति दान्तिः स्मर्यते। *"मनसो विजयः शमः, विजितस्य तस्य तत्त्वविषयनियोगयोग्यता दमः" इति वाचस्पतिः। उपरतः—देहयात्रायामपि यदृच्छालाभसन्तुष्ट्या नातिप्रवृत्तः। तितिक्षुः—दुर्निवाराणि द्वन्द्वानीति शेषः। समाहितः—ब्रह्मण्येकाग्रधीः। आत्मनि—शरीरे, अवधारणमासस्त्यतिशयपरम्। "राहोश्शिरः" इतिवद्वा भेदकॢप्त्या "आत्मन्येवात्मानम्" इत्युच्यते। न हि वस्तुत. स्वस्मादन्योऽन्यत्र वा मृग्य इति भावः। पश्येत् इति। [3]अनेनाप्रत्यक्षभ्रमस्य तादृशमेव बाधकमिति सूच्यते।

**तदेव जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्या 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्',**

---

१ भूत्वेत्युक्त्या पा (सु, ख, घ,) २ शान्त पा (सु)

* टि—"मनोविजय शम" "विजित च मन तत्त्वविषयनियोगयोग्यता नीयते, सेयमस्य योग्यता "दम" इति भामत्या पाठ

३ अनेन प्रत्यक्ष पा (क, ख, च)

'सत्यं ज्ञानमनन्तं ब्रह्म', 'निष्कलं निष्क्रियं शान्तम्,' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते।

यदि न कर्मणा धीः, केन तर्हि स्यात्, विद्योत्पत्तौ चानपेक्षितमपि कर्म "स खल्वेव वर्तयन्" इत्यादिश्रुतिबलाद्विद्यया विकल्पतः, समुच्चयतः, प्रधानतया, अनुग्राहकत्वेन वा मुक्तावपेक्ष्यतामित्यत्राह—**तत्** इति। स्वरूपफलविरोधादित्यर्थः। **एवम्**—यज्ञादीना तृतीयाश्रुत्या विविदिषाया विनियुक्ताना विद्यासाधनत्वासम्भवप्रकारेणेति यावत्।

जन्मान्तरशतेत्यादि क्वचित्तादृशसम्भवे।
अस्मिन् जन्मनि धर्माणामनाघ्राणाय भाषितम्॥ २८९॥

अतो [1]विविदिषार्थत्व नास्मिन् जन्मनि कर्मणः।
विचारवृत्तता सूत्रे वक्तव्येत्यभिमन्यते॥ २९०॥

ननु फलतो बन्धक कर्म कथ विविदिषासाधनमपि स्यादित्यत्राह—**अनभिसंहितफल** इति।

अनिष्टोऽपि भवेद्दण्ड· [2]प्रतिषिद्धेषु लोकवत्।
काम्येषु तु फल[3] तत्तद्विनियोगानुसारतः॥ २९१॥

चित्तशुद्ध्यादिव्यवच्छेदाय विशेषशब्दः "कषाये कर्मभिः पक्के ततो ज्ञान प्रवर्तते" इत्यादिस्मृतिवाक्य श्रौतविनियोगबाधाद्व्यवधानसहमित्यभिप्राये-

१ विविदिषार्थं च पा (क, च) २ प्रतिषिद्धोऽपि पा (च) ३ तद्वद्विनियोग पा (छ),

णोक्तम्। **मृदितकषायस्य विविदिषोत्पत्तौ सत्याम्** इति। **कषायः**—कल्मषम्, रागादिश्च। नात्र कर्मणामव्यवधानेन प्रमाजनकत्वम्, प्रमाणेष्वनन्तर्भावात्। अतो निर्विशेषब्रह्मात्मैक्यधीस्तत्त्वावेदकवाक्यजन्येत्यभिप्रायेण तादृशवाक्योपादानम्। तत्र कारणत्वेन लक्ष्यत्वाद्ब्रह्मणः प्रथम कारणवाक्यमाह—**सदेव** इति। अवधारणाभ्याम्, अद्वितीयपदेन च औचित्याद्विजातीयसजातीयस्वगतभेदनिरासः। षड्विधतात्पर्यलिङ्गोपेतसद्विद्याबलाद्गुणोक्तिमत्कारणवाक्यानि स्तुत्यादिपराणि वेति भावः। सद्विद्योक्तमीक्षणादिकमपि बाध्यमित्यभिप्रायेण शोधकैरपि निर्विशेषत्वमाह—**सत्यम्** इति। अनृतजडपरिच्छिन्नत्वव्यावृत्तिरिहाभिप्रेता। सत्यादिवाक्यस्य व्यावृत्तिपरत्वव्यक्त्यै शाब्द विशेषनिषेधमाह—**निष्कलम्** इति। निरंशमिति यावत्। **निष्क्रियम्**—निष्पन्दम् निर्व्यापार वा। **शान्तम्**—वस्तुतः षड्भिः [1]विकारैरूर्मिभिश्च त्यक्तम्। सर्वजीवोद्देशेन तद्व्यापकतया ब्रह्मैक्यविधिमाह—**अयम्** इति। सद्विद्यायामप्याप्ततमेन पित्रा पुत्र प्रति तात्पर्यभूम्ना [2] तद्विधि वक्ति—**तत्त्वम्** इति। आदिशब्देन "आत्मा वा इदमेक एवाग्र आसीत्", "आनन्दो ब्रह्म", "यत्तदद्रेश्यमग्राह्यम्", "तद्योऽह सोऽसौ [3]इत्यादिग्रहः। वाक्यादेव जन्म यस्य तद्वाक्यजन्म, तस्मात् ज्ञानात्, प्रत्यक्षरूपात् इति शेषः। तत एवाविद्या निवर्तते। राजत्वोपदेशेन व्याधत्वादिभ्रमनिवृत्तिवदिति भावः।

ज्ञानादेवेति निर्धारः कर्मणो मुक्तिसाधने।
समुच्चयविकल्पाङ्गप्रधानत्वापनुत्तये ॥ २९२ ॥

---

१ भावविकारै पा (सु) २, आम्नातविधिम् पा (सु)
३ इत्यादिसङ्ग्रह पा (सु)

"स खलु" इत्यादिकमन्यपरम् । ध्याननियोगजन्यज्ञानपक्षं तु दूषयिष्यति ।

वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम् । श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्या निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम् । तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्र फलभोगविरागः, मुमुक्षुत्व चेत्येतत् साधनचतुष्टयम् , अनेन विना जिज्ञासानुपपत्तेः । अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ।

नन्वदृष्टस्य सर्वकार्यहेतुतया कर्मणो वाक्यसहकारित्वादविधेयज्ञानान्मुक्तिरिति पक्षे श्रवणमननपूर्वकध्यानविधेः त्रयाणा वा विधीना वैयर्थ्यं च स्यादित्यत्राह—**वाक्यार्थ** इति । अदृष्ट हि दृष्टोपनायकम् । तत्सिद्धैः श्रवणादिभिः शमादिभिश्च वाक्य चरितार्थम् । ततो विश्वबाधकज्ञानोत्पत्तौ दृष्टोपकारितया श्रवणादित्रयसाफल्यमित्याशयः । [1]ननु नित्यनिर्विशेषस्वप्रकाशे शास्त्रवैयर्थ्यम्, "ब्रह्मवित्" इत्यादिषु कर्मकर्त्रादिभेदोक्तिविरोधः, ऐक्यतत्त्वदर्शी च न शिष्य पश्येत्, भेदभ्रमोपेतश्च कथ वाक्य श्रावयेदित्यत्राह—**श्रवणम्** इति । अत्रेत्युपस्कार्यम् । **तत्त्वदर्शिन** इत्यपि स्वाभीष्टविशेषाभिप्रायम् । **प्रतिपादकानि**—प्रदायकानि, उत्पादकानीति वा । कर्ममीमासा ह्यविद्वदर्था कर्तव्यस्थापिका । ब्रह्ममीमासा तु तत्त्वबोधोत्पादनेन सर्वकर्तव्य-

१ ननु निर्विशेष पा (क)

...विशेष । आपातधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय न्याययुक्त-...मनुनात्र न्याययुक्तत्वं स्वरूपत एव ग्रहणमिति केचित् । भेद-... ...मननतया शास्त्रादे. सफलत्वम् । [1]आविद्यभेदानुवादेन तन्निषेधे ...विरोध । ऐक्यदर्शिनोऽपि बाधितानुवृत्तेराचार्यत्वाभिमानेन श्रावकत्व-... भाव. । न्याययुक्तग्रहणे किं पुनः [2]मननेनेत्यत आह—एवम् इति । स्वात्मनि ...चित्त । हेतुतः प्रतिष्ठापनम्—संशयादेरपुनरङ्कुरत्वाय युक्तिसंस्कारपटिम्ना ...स्थापनमित्यर्थः । ननु ताभ्यामेव विपरीतविस्रम्भो निवर्तेत, अन्यथा ...ध्यान किमत्र ध्यानेनेत्यत्राह—एतत् इति । एतदुपकृतवाक्यजन्याद्वैत-...विरोधिनीनां भेदवासनानां निरासकतया ध्यानं सफलमिति भावः । ...वचने च— तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः " ...इति । स्यादेतत्—ध्यानपर्यन्तोपकारेण शास्त्रे कृतकृत्ये योगबलान्निवर्त-...र्थी अन्यथा चक्रक स्यादित्यत्राह—श्रवणादिभिः इति । [3]निवृत्ते हि ...निबन्धे हेतुना यथावत्कार्यकरत्वम् , हेत्वन्तरान्वेषणे तु गौरवम् , अतो ...वचन एव वैशद्यवती निवर्तकधीः, श्रवणात्पूर्वमिव श्रवणतोऽप्यविशद-...त्वं , तदुपजीवनेन मननादिक्रमेण ज्ञानान्तरस्य साध्यत्वान्न चक्रकमिति भावः । इतिर्हेतौ, एतेषु पर्वसु कथञ्चिदपि कर्मनैरपेक्ष्यादित्यर्थः । एव-...रूपस्य—कर्मनिरपेक्षनिवर्तकज्ञानमूलकारणस्येति यावत् । साधारणानियता-नुपयुक्तानां व्यावृत्त्यै श्रवणस्यावश्यापेक्षितम् इति पदत्रयम् । तादृशं त्वदिष्टं किमित्यत्र हार्दमुद्गिरति—तत् इति । " नास्त्यकृतः कृतेन " " शान्तो

---

१ अविद्याभेद पा (ख)  २ मननेन अत पा (क, ख, घ च)
३ निवृत्ते प्रतिबन्धे पा (च)

दान्तः " " येनाहं नामृता स्यां किमहं तेन कुर्याम् " " त मा भगवान् शोकस्य पार तारयतु " इत्यादिभिरेतच्चतुष्टयसिद्धिः । अस्यावश्यापेक्षितत्व कुत. ? तत्राह— **अनेन** इति । अनित्यजिहासा, नित्योपादित्सा च तद्विवेकतः । तत्पूर्वको विचारस्तु स्वरूपफलयोः चित्तविक्षेपनिवर्तकशमाद्यपेक्षः । अन्यविरागश्च शमाद्यर्थः । एतेषा न कर्मविचारवद्व्यभिचारो व्यवधान वा । [1]एतदन्यतमवैकल्येऽपि त्याज्योपादेयजिहासोपादित्सयोरसिद्धेः उक्तप्रकारश्रवण न सिध्येदिति भावः । कर्मविचारोऽपि विवेकोपयोगाद् वृत्तत्वेन [2]वक्तव्य इत्यत्राह—**अर्थ** इति । शमादेः कर्मनिवृत्तिरूपत्व, कर्मणोऽनुपयुक्तविरुद्धत्वे, तत्त्वज्ञानस्याध्यस्तनिवर्तनेऽन्यनिरपेक्षत्व च अर्थस्वभावः । ज्ञानस्यैवापेक्षितत्वे, [3]तत्साधन [4]चतुष्कस्य [5]वृत्तत्वे च यो हेतुस्तस्मादेवेत्याद्यावधारणम् । एव वाक्यद्वयेन चतुष्कस्यायोगान्ययोगव्यवच्छेदावुक्तौ ।

एतदुक्तं भवति— ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्चापारमार्थिकः । स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते । निवर्तक च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् । तस्यैतस्य वाक्यजन्यज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणा नोपयोगः । विविदिषायामेव तु कर्मणामुपयोगः । स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्ववृद्ध्या भवतीति इममुपयोगमभिप्रेत्य " ब्राह्मणा विविदिषन्ति "

---

१ एतदन्यतमवैकल्ये पा (क, ख, घ) २ न वक्तव्य पा (ख, घ, सु)
३ साधन पा (सु) ४ चतुष्टयस्य पा (ख)
५ पूर्ववृत्त पा (सु)

* टि—ब्रह्मस्वरूपाच्छादिकाविद्यामूलमित्येव सर्वेषु कोशेषु पाठ उपलभ्यते । तत्र " पुंवत्कर्मधारय " इति पुंवद्भावाभावाय त्रिपदबहुव्रीहिराश्रयणीय यथा—ब्रह्मस्वरूपाच्छादिका अविद्या मूल यस्येति । एवमेव उपपादित सूक्तिसाधुत्वमालिकाया महाचार्यवर्यै श्रीवीरराघवाचार्यै ।

इत्युक्तमिति । अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ।

नन्वज्ञानादिप्रत्यनीकस्वमात्र[1]प्रकाशे निर्विशेषे नित्यमुक्ते ब्रह्मणि कथमविद्यातिरोधानभेददर्शनबन्धतन्निवृत्तिनिवर्तकादीना सम्भवः ? कर्मकृतस्य बन्धस्य निष्कृतिनयात् कर्मविशेष एव निवर्तकः स्यात् । निवर्तकज्ञानं च "ततो ज्ञान प्रवर्तते" इति स्मरणात् कर्मसाध्यम् । कथ च बन्धकस्वभावस्य कर्मणः क्वचिन्मुमुक्षोपयोगः ? अन्तःकरणस्य कुतः कीदृङ् मालिन्यम् ? कुतश्च कीदृङ् नैर्मल्यम् ? कर्मणश्च प्रमाणतन्त्व ज्ञान प्रतीव विषयानुकूल्यधीनिम्नां विविदिषा प्रत्यपि कारणत्वं न दृष्टम् । निवृत्तिधर्मस्य मोक्षहेतुत्वाभावे तद्वाक्यवैयर्थ्यप्रसङ्गः इत्यादिशङ्काशङ्कानुद्धरन् [2]कण्ठोक्तमाभिप्रायिक च सकलय्य दर्शयति—[3]एतत् इति ।

प्रपञ्चितस्य संक्षेपः संक्षिप्तस्य प्रपञ्चनम् ।
एतदुक्तभवतिना समाधिर्व्याकुलस्य च ॥ २९३ ॥

आच्छादकत्वोक्त्या भावरूपत्व सूच्यते । तत एव तदुपहितस्योपादानत्वसभवः । अविद्यया [4]मनागिव छन्नत्वाद्ब्रह्मण्यध्यासाद्युपपत्तिः । स्वप्नदृष्टपुरुषान्तरादिभेददर्शनसाम्यसूचनाय **अपारमार्थिकशब्दः** । **भेददर्शनमेव** इत्यत्र [6]देहात्मैक्यबुद्धावपि कर्तृत्वभोक्तृत्वदेवत्वमनुष्यत्वादिभेददर्शनमन्तर्णीयते । तेन [5]देहातिरिक्तत्वज्ञानमेवाल, किमकर्तृत्वादिविशेषितब्रह्मज्ञानेनेति च शङ्का

---

१ प्रकाशे नित्यमुक्ते पा (सु)
२ कण्ठोक्तिम पा (सु, क, घ)
३ अत इति पा (सु)
४ मनागवच्छिन्न पा (सु)
५ देहातिरिक्तज्ञान पा. (सु)
६ देहाधैक्य पा (क, ख, घ)

निरस्ता । कर्मणोऽपि न स्वयं बन्धकत्वम्, [1]दृष्टोपनायकसाधारणनिमित्तत्वात् । अतो भेदभ्रमसिद्धस्य कर्मणोऽप्यपारमार्थिकत्वात् भेदभ्रमद्वारेणैव बन्धकत्वान्नात्र ज्ञानेतरनिवर्त्यं सत्यं [2]किमपि न बन्धकमस्तीत्यवधारणाभिप्रायः । नन्वसत्यात्सत्यसिद्धिस्त्वन्मतेऽस्तीत्यत्राह—**बन्धश्च** इति । बन्धस्य [3]अबाधितत्वे हि [4]सत्यत्वासत्यत्वशङ्का, ब्रह्मणो नित्यमुक्तत्वविरोधश्चेति भावः । निष्कृतिन्यायपरिहारायाह—**स च** इति । सत्कर्मणा पापनिवृत्तिश्च भ्रान्तिसिद्धा । अतो मूलभूताविद्या [5]प्रतिबन्धपर्यन्तं [6]कृत्स्नं मन्त्रनिरपेक्षरज्जुसर्पनयात् कर्मनिरपेक्षाद्वैतबुद्ध्यैव बाध्यमित्यभिप्रायेण **ज्ञानेनैव** इत्युक्तम् । मोक्षसाधनस्य कर्मसमुच्चयाभावेऽपि स्मृतिवशात्तदुत्पादकस्य स्यादित्यत्राह—**निवर्तकम्** इति । अयं भावः—विगीतं प्रमाणजन्यं निवर्तकज्ञानत्वात् अविगीतवत्, न कर्मजन्यमिति वा साध्यम् । स्मृतिस्त्वन्यपरा । परिशेषाद्वाक्यहेतुकत्वं स्वोक्तयुक्तिबलादिति । [7]परोक्तं कर्मोपयोगं प्रमाणशून्यं इत्यभिप्रायेणाह—[8]**तस्यैतस्य** इति । तस्य—अद्वैतगोचरस्य कर्मव्यतिरिक्तकरणतदनुग्राहकवतः । एतस्य—स्वविषयविरुद्धबाधे स्वयमेव समर्थस्य अन्वयव्यतिरेकवतः । कारणान्तरव्यपोहाय वाक्यजन्यत्वोक्तिः । "यज्ञेन विविदिषन्ति" इति श्रुतेर्यज्ञादीनां विनियोगपृथक्त्वेन पृथक्फलत्वोपपत्तिरिति स्थापयति—**विविदिषायाम्** इति । यथाश्रुतायामित्यवधारणाभिप्रायः । तत्राप्यव्यवहितहेतुत्व

1 दृष्टोपनायकं त्वा पा (ग)
2 न किमपि बन्धकम् पा (ग)
3 अबाधितत्वेऽपि हि पा (क, ग, ङ, च)
4 सत्यत्वशङ्का पा (क, च)
5 प्रभृतिपर्यन्त पा (ङ)
6 कृत्स्नमन्त्र पा (ग)
7 परोक्त कर्म पा (क, ग, घ, ङ)
8 तस्यैव पा (ङ)

[illegible] व्यावर्त्यते । असिना [1]जिघांसतीत्यादिवत् क्लिष्टगतिर्बाधसिद्धौ । अत्र मनोमालिन्यादिकं विवृणोति—स च इति । धर्मस्य पापनिवृत्त्यादि [illegible] विहितम् । [2]श्रद्धाया: सत्त्वरूपसाध्यान्तरं च शास्त्रसिद्धम् । सत्त्वस्य ज्ञानमात्रनन्वान्तिश्च परम्परया स्यात् । पापमूलरजस्तमोविवृद्धिर्मनोमालिन्यम् । धर्मेण [3]तदपनुत्त्या सत्त्वशुद्धिर्नैर्मल्यम् ।

कर्मभिः शुद्धचित्तस्य तत्त्वे स्या[4]दनुकूलधीः ।
निर्णिनीषा ततस्तस्मिन् कर्मजैव भवेदिति ॥ २९४ ॥

अत्र प्रथम इतिहेतौ, सोपबृंहणश्रुतिस्वारस्यानुगुणनिर्वाहादित्यर्थः । इमम् [illegible]पत्तावपि त्रिचतुरकक्ष्याव्यवहितमिति यावत् । अभिप्रेत्य—शाब्दत्वाभावेऽपि श्रुत्यन्तरेण स्मृत्या च स्वीकृत्य । ईदृशोपयोगान्निवृत्तिधर्मविधेश्च साफल्यमिति भावः । अत्रोपायशोधने वक्तव्यशेषो न किञ्चिदित्यभिप्रायेण निगमयति—अत इति । उपादातुं हातुं वा ज्ञानतद्विचाराभ्यां कर्मतद्विचारयोरनपेक्षणादित्यर्थः । अत्राय सङ्ग्रहस्तूलिकास्थः—

'विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।
ज्ञानमात्रस्य[5] हेतुत्वे श्रुतेः सामर्थ्यतोऽपि च ॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः ।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका ” ॥ इति ।

---

१ जिघांसतीत्यादौ पा (सु)  २ श्रद्धया पा (क, च)
३ तदपाकृत्या पा (च)  ४ दानुकूल्य पा (च)
५ हेतुत्वश्रुते पा (सु)

विरोधात्—स्वरूपतः फलतश्चेति शेषः। अप्रमाणत्वात्—कर्मणा ज्ञान-तत्फलयोः साधनत्वे प्रमाणशून्यत्वात्। यद्वा प्रमाणत्वाभावात्। सामर्थ्यतः—[1]मिथ्याभूतबाधे [2]ज्ञानस्यैव पर्याप्तत्वात्। धीकर्मसमुच्चयः—मतत्रयोक्तप्रकारः। उन्निद्रत्व प्रतिबन्धनिवृत्त्या पुष्कलत्वम्।

## लघुसिद्धान्तः

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्म-विज्ञानादेव भवतीति, तदभ्युपगम्यते—अविद्यानिवृत्तये वेदान्तवाक्यै-र्विधित्सित ज्ञानं किंरूपमिति विवेचनीयम्, किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मक ज्ञानमिति। न तावत् वाक्यजन्य ज्ञानम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनु-पलब्धेश्च।

अविरोधविहीनत्वात् ख्यातत्वादुपपन्नवत्।
पक्षेऽस्मिन् दूषण वाच्यमत्रोच्यत इतीर्यते ॥ २९५ ॥

इह तावत् साध्यसाधनद्वित्वनिरास विरुद्धाशङ्काय 'यदुक्तम्' इत्यादिना सामान्यतोऽनुमन्यते। अविद्यातन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकार विशेषतो विमतिरस्त्येव, स्वमते ह्यविद्यानिवृत्तिर्नाम स्वाभावि-कधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः, स च भावान्तररूपः।

साध्यसाधन-द्वित्वनिरास

प्रतिबन्धनिवृत्त्यंशोऽनिष्टभङ्ग इहोदितः।
धीविकासः स्वतः सिध्यन्निष्टप्राप्तिर्विवेचकैः ॥ २९६ ॥

---

१ मिथ्या भूतज्ञाम पा (घ) २ ज्ञानमात्रस्य पा (सु)

"र्नो नावधारणविरोध. । ब्रह्मतद्विज्ञाने च परमार्थब्रह्माकारे, न वयं "विज्ञानस्य कारणत्वाभाव, कर्मसमुच्चितत्व, फले तत्सहकृतत्व वाभ्युपगच्छाम न्त्र्यन्ताग्रेण ब्रह्मविज्ञानादेव इत्युक्तम्। अभ्युपगम्यते चेत् कि दूष्यमित्यत्र निर्वर्ज्ञानप्रकार [1]तावद्विगानमाह—अविद्या इति। विधित्सितम्—भ्रमेन मावननतया चोदयितुमिष्ट, परमते तूत्पिपादयिषितम्। [2]एव तन्त्रोक्त "अव्वने—क्रियरूपमिति। कि कर्मनिरपेक्षतया त्वदुक्तम्, उत कर्माङ्गतया [3]अस्मदुक्तमित्यर्थः। विवेचनीयम्—[4]अन्यतरकोटिनिरासेन कोट्यन्तरतया "रिशेषणीयमिति यावत्। [6]सङ्कलित विविङ्क्ते—किम् इति। वाक्यार्थगो-चरमनिरूपविधेयव्यावृत्त्यै [7]वाक्यात् इत्युक्तिः। इन्द्रियसम्बन्धाद्वाक्यतः तत्स्वरूपधीः स्यात्, पुत्राद्यनुमा च, तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम्। ध्याना-देद्वाग्नेरपेक्ष्य मात्रचोक्तम्। परस्य वाक्यार्थज्ञान जीवपरयोरैक्यधीः, स्वस्य तु प्रकार-प्रकारित्वबुद्धि., अतः [8]तन्मूलत्वोक्तिरविरुद्धा। मननादिव्यावृत्त्यर्थम् [9]उपास-नात्मकत्वोक्ति.। परेष्ट दूषयति—न तावत् इति। तिष्ठतु पक्षान्तरम्; इद नु नेत्यर्थ.। [10]परकल्पितपश्चिमवाक्यार्थज्ञानस्यासम्भव वक्ष्यन् सर्वसम-प्रथमवाक्यार्थज्ञानस्य उपायत्वे "द्रष्टव्यः" इत्यादिविधिवैयर्थ्यप्रसङ्ग विधित्सि-तपदमुचितमुद्घाटयति—तस्य इति। विधेः शब्दजन्यज्ञाने निर्व्यापारत्व परैरेवोक्तम्,

---

| | |
|---|---|
| १ तद्विगानम् पा (सु) | २ तत्रोक्तम् पा (सु) |
| ३ मदुक्तम् पा (क) | ४ अन्यतरनिरासेन पा (सु) |
| ५ वा परिशे पा (सु) | ६ सङ्कल्पितम् पा (क) |
| ७ वाक्याद्युक्ति पा (क) | ८ तन्मूलोक्ति पा (सु) |
| ९ उपासनत्वोक्ति पा (सु) | १० परिकल्पित पा (क) |

"प्रमाणज्ञान वस्तुतन्त्र न पुरुषतन्त्र कर्तुमकर्तुमन्यथाकर्तुं [1]चाशक्यत्वात्" इत्युक्तेरित्याशयः। **वाक्यात्**, स्वरूपपरवाक्यादिति यावत्। एवकारो विधिनैरपेक्ष्य बाध्यवासनायाः प्रतिबन्धकत्वायोग च व्यनक्ति। **सिद्धेः**— उत्पत्तेः। न तावदिह वाक्यजन्य ज्ञान तत एव [2]वाक्यात् बोध्यम्, ससर्गतया ससृष्टतया वा प्रवेशाभावात्। नापि "प्रज्ञा कुर्वीत" इत्यादिवाक्यान्तरैः, सिद्धस्याविधेयत्वात्। साधनत्वेन बोधन चानपेक्षितम्, अदृष्टार्थत्वानभ्युपगमात्, कल्पितबाधे च सामर्थ्यतः साधनत्वावगतेः। अतो विधिवैयर्थ्यमित्याशयः। ननु विध्यनुसारित्वान्न विधित्वमिति चेत्, तथापि तादृशाम्नानवैयर्थ्यं दुरतिक्रमम्। विधिवैयर्थ्योक्तिः आप्रयाणानुष्ठेयविधेयाकारवर्गवादिनां ब्रह्मनाडीनिष्क्रमणदेवयानगत्यादिवादिना च शास्त्राणा वैयर्थ्य[3]मप्युपलक्षयति।

अत्र प्रत्यक्षविरोधमप्याह—[4] **तावन्मात्रेण** इति। न ह्युत्पन्नं ज्ञानमविद्यानिवर्तने अन्यदपेक्ष्य विलम्बेत, यतोऽनुपलब्धिरबाधिका स्यात्। सा च [5]स्वपरयोः प्रत्यक्षानुमानसिद्धा। प्रत्यक्षविरुद्ध च न शास्त्रवेद्यम्, न च तादृशविज्ञानमात्रादविद्यानिवृत्तिः, अन्वयव्यतिरेकासिद्धेरिति भावः। अत्रैवमापस्तम्बेन शास्त्रविरोध उक्तः—"बुद्धे क्षेम[6]प्रापणम्, तच्छास्त्रैर्विप्रतिषिद्धम्" इति। विशेषेण प्रतिषिद्धमित्यर्थः, न हि तुल्यबलविरोधोऽत्र

(वाक्यजन्यज्ञानस्य मोक्षोपायत्वनिरास)

---

१ चाशक्यत्वाद्युक्ते पा (क)
२ वाक्याद्वेद्यम् पा (सु)
३ मुपलक्षयति पा (सु घ)
४ तन्मात्रेण पा (सु)
५ परस्परयो पा (सु)
६ प्रापण तु शास्त्रै पा (ख, घ)

घट्टन । प्रत्यक्षविरोधश्चोक्तः—"बुद्धे चेत् क्षेमप्रापणमिहैव [1]न दुःखमुपलभेत [2]एतेन पर व्याख्यातम्" इति ।

**न च वाच्य भेदवासनायामनिरस्तायां वाक्यम् [3]अविद्याया निवर्तकं ज्ञान न जनयति, जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्, अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति—सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् ।**

श्रुतिप्रत्यक्षविरोधयोर्द्विधोत्तरमनूद्य निषेधति—**न च** इति । न्यायोपेतश्रवणं पश्चादिव प्रागपि कथं [4]ज्ञानानुत्पत्तिः इत्यत्रोक्तम्—**भेदवासनायाम्** इति । प्रतिबन्धकवासनानिरासे विधीनामुपयोगः । दिग्भ्रमादयो हि उपदेशलिङ्गाभ्यामनिवृत्ताः कदाचित् कुतश्चिद्वासनाविच्छेदे निवर्त्यन्ते, तद्वदिहेति भावः । दृश्यमानपरोक्षज्ञानव्यावृत्त्यर्थम् [5]**अविद्याया निवर्तकम्** इत्युक्तम् । [6]**न जनयति** इत्यनेनाविद्यानिवृत्त्यनुपलब्धिविरोधोऽपि परिहृतः ।

अत्रेवमद्वैतसम्प्रदायरहस्यम्—[7]आपातिक तु ज्ञानमविद्या [8]न निवर्तयति, अनिश्चयात्मकत्वात् । विचारजन्या तु धीः परोक्षाध्यवसाय[9]रूपा भेदसत्यत्वभ्रमजनकमविद्याश निवर्तयति, तथाप्यपरोक्षानादिभेदभ्रमोपचिता तद्वासना तादृश भ्रम-

---

१ न वा पा (ख, घ)
२ तेन पर पा (ख, घ)
३ अविद्यानिवर्तकम् (श्रुत पा)
४ ज्ञानानुपपत्ति पा (सु)
५ ज्ञानमविद्याया पा (सु)
६ जनयति पा (सु)
७ आपातिक ज्ञानम् पा (क, ख, घ, च)
८ तु निवर्तयति पा (क, ख, घ, च)
९ रूपभेद (सु, क, ख, घ)

माधत्ते। तदवष्टम्भोऽविद्यांशस्तु अद्वैतसाक्षात्कारेण [1]निवर्तते। निवृत्तेऽपि तस्मिन् प्रारब्धकार्यकर्मावष्टम्भः कश्चिदविद्यांशोऽनुवर्तते, तां दशां जीवन्मुक्तिमाहुः सोऽप्यंशोऽन्तिमाद्भोगसंवेदनादात्मसंवेदनाद्वा निवर्तते। ईदृशाविद्यांशभेदाभिप्रायेण "इन्द्रो मायाभिः पुरु[2]रूप ईयते" इत्युच्यते। उक्तक्रमेण मायांशाना निवृत्तिमभिप्रेत्य "भूयश्चान्ते विश्वमायानिवृत्तिः" "विमुक्तश्च विमुच्यते" इति श्रुतिराहेति। तत्र द्वितीयांश इहाविद्याया इत्युक्तः। अथ परोक्षरूपस्यैव ज्ञानस्य निवर्तकत्वमन्वारुह्यापि प्रत्यक्षविरोधं परिहरति—**जातेऽपि** इति। यद्वा सर्वविदां सनकादीनामनुत्पन्नसाक्षात्कारत्वमविद्यावत्त्वं च न युक्तम्; उत्पन्नसाक्षात्काराणां तु शिष्यादिप्रतिभासायोगादुपदेष्टृत्वादिकं न स्यात्। न हि [3]परोक्षज्ञानमात्रवान् तत्रोपदेष्टा, "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति विशेषणात्। अत उभयतस्पाशा रज्जुरित्यत्र तृतीयाविद्यांशस्थितिदशानुसारेण प्रतिवक्ति—**जातेऽपि** इति। यस्यैकैव ब्रह्माविद्या, एक [4]एव च जीवः, तस्यैकाविद्यानिवृत्तौ [5]क्वापि जीवपदास्पदभेद [6]भ्रमानुवृत्तिर्बन्धमुक्तिव्यवस्था च न स्यादिति चोद्यानुवादसूचनायान्तःकरणभेदोपाधिकाभिव्यक्ति[7]विकल्पानुसारेण **सर्वस्य** इत्युक्तम्। **सहसैव** इत्येतन्निवृत्त्या योज्यम्। अविद्यांशान्तरावष्टब्धप्रवृत्तफलकर्मावसाने हि [8]सर्वभेदभ्रमनिवृत्तिरिति

---

१ निवर्त्यते (सु, क, ख, ग, घ)

२ रूप इत्यु पा (क, ख, घ, च)

३ तत्र परोक्षज्ञानमात्रं वोपदेष्टा पा (सु)
न हि परोक्षज्ञानमात्र वा तत्रोप पा (घ)
न हि परोक्षज्ञानमात्रवानत्रो पा (क, च)

४ एव जीव पा (क, घ)

५ न क्वापि पा (क, ख, घ, च)

६ भ्रमानुवृत्तिबन्ध पा (क, घ)

७ विकल्पनानु पा (घ)

८ सर्वभेदनिवृत्ति पा (क, ख, घ) सर्वभेदधीनिवृत्ति पा (च)

भावः । **न दोषाय**—अविद्यानिवृत्तौ भ्रमोऽपि निवर्तेत, अकारणकार्यायोगात् । अतो रागादिदृष्ट्या भ्रमानुवृत्तेरविद्यापि [1]न निवृत्तेति ज्ञानस्य निवर्तकत्वाभावप्रसक्त्यै न स्यात्, [2]बाधितस्याप्यनुवृत्तिसम्भवात् [3]इत्यभिप्रायः । स्वेष्ट लोकदृष्ट्या प्रत्याययति—**चन्द्र** इति । [4]अङ्गुल्युपष्टम्भादिमतः चन्द्रैकत्वे वाक्यतो ज्ञातेऽपीति भाव्यम् । इद निदर्शनमन्वारुह्यवादे सुगमम् । अन्यत्र तु निवर्तकज्ञानस्य प्रत्यक्षत्व निगृह्य नेतव्यम्, [5]प्रत्यक्षतश्चन्द्रद्वित्वभ्रमे बाधिते पुनस्तदनुवृत्त्ययोगात् ।

यद्वा प्राच्यादुपष्टम्भाद् भ्रमे प्रत्यक्षबाधिते ।
पुनरङ्गुल्युपष्टम्भाद् भ्रमावृत्तिर्न दृश्यते ॥ २९७ ॥

अविद्याजनिता भ्रान्तिर्वाक्यजाध्यक्षबाधिता ।
युक्ता तदनुवृत्तिर्हि भूयस्संस्कारशेषतः ॥ २९८ ॥

ननु तत्त्वदर्शनात्प्रागपि भेदज्ञानमेव बन्धमूलम्, पश्चादपि तदनुवृत्तौ रागाद्यनुवृत्त्या बन्धानिवृत्तिः स्यात्, न हि कारणनिवृत्त्या कार्यं स्वकार्याय घटते, मन्यसे चाविद्याशेषानुवृत्तिमित्यत्राह—**अनिवृत्तम्** इति । अपिर्विरोधद्योतकः । मूलच्छेदात् खण्डितलतान्यायेन क्रमाद्विनश्येत्, न पुनः प्ररोहेत् । स्वविषयसत्यत्ववासनारूषित हि भेदज्ञान रागादिहेतुः, प्रतिमायोषिदादिषु तथाभावादित्यभिप्रायेण **छिन्नमूलत्वोक्तिः** । [6]दग्धपटचक्रभ्रमादिन्यायोऽत्राभिप्रेतः ।

---

१ न निवर्तेत पा (सु). २ अबाधितस्याप्य पा (सु)
३ इति भाव पा (सु) ४ अङ्गुल्यवष्टम्भादि पा (ख).
५ प्रत्यक्षचन्द्रद्वित्व पा (सु) ६ दग्धपटचक्रभ्रमन्याय पा (घ)

अत्र ज्ञान न जनयतीत्युक्त तावन्निरस्यति—सत्याम् इति । व्युत्पन्नपदमाकाङ्क्षा-दिविमर्शोपेत वाक्यमपेक्षणीयान्तररहितमित्यभिप्रायेण सामग्रीशब्दः, अन्यथाति-प्रसङ्ग इति भावः। नन्वप्रतिबन्धोऽपि सामग्रीति न्यायाद्भेदवासनैव स्वनिवृत्ति-रूपकारणाभावात्मा सामग्रीवैकल्य स्यात् । यद्वा पुष्कलाया अपि सामग्र्याः [१]शक्त्यपहारेण प्रतिबन्धिकेत्यत्राह—सत्यामपि इति । अयं भावः—यदि विप-रीतवासनैव प्रतिबन्धः प्रतिबन्धिका वा स्यात्, [२]तदा अनिरस्तसंस्कारे रज्जुसर्पा-दिभ्रमे कदाचिदपि बाधकधीर्नोदियात्, उदेति चासाविति प्रसङ्ग[३]तद्व्यभिचारा-भ्या व्यतिरेकव्यभिचारदृष्टे. न विरुद्धवासनानिवृत्तिरत्र हेतु', [४]रज्जुसर्पवासना-नुवृत्तावपि हि 'नाय सर्पः' इत्याप्तवाक्येन [५]दण्डसङ्घट्टनादिनिरूपितेन निश्चेष्टत्वादि-लिङ्गेन च परोक्ष बाधकज्ञान [६]जायते । [७]चन्द्रभेदवासनानुस्यूतावपि अङ्गुल्युपष्ट-म्भादिदोषापगमे चन्द्रैक्यप्रत्यक्षधीरपि भवति । न च वाक्यादपरोक्षबुद्ध्युत्पत्तौ विरुद्धवासनानिवृत्तिरपेक्षितेति वाच्यम्, अविशिष्टशक्तेर्वाक्यस्य परोक्षधीजननेऽपि तदपेक्षाप्रसङ्गात्, [८]अभेदवासनया भेदवासनानिवृत्ति वदतः चक्रक च स्यात्—अभेदाध्यवसाये तद्भावना, तया भेदवासनानिवृत्तिः, तत एवाभेदाध्यवसाय इति । अध्यवसाये वासनानिवृत्तिरनपेक्षितेति चेत् साक्षात्कारेऽपि [९]नापेक्ष्येत, अविशेषात् । दशमान्वेषिणश्च दशमाभाववासनास्थितावपि [१०]'दशमस्त्वमसि' इत्युपदेशेन प्रत्य-

---

१ शक्त्यपरिहारेण पा (सु, ख, घ) शक्त्याहारेण पा (च)
२ स्यात्, अनिरस्त पा (क, ख, घ, च) ३ तद्विपर्ययाभ्याम् पा (च)
४ रज्जुसर्पवासनानिवृत्ता (सु) ५ दण्डघट्टनादि पा (क, ख, च)
६ न जायते पा (सु) ७ चन्द्रभेदवासनानुस्यूतावपि पा (सु, घ)
८ अभेदवासनाया पा (ख, घ) ९ नापेक्ष्यते (क, घ)
१० दशमस्त्वमित्यु पा, (सु)

क्षधीजनन च त्वयैवोक्तम् । 'तत्त्वमसि' 'दशमस्त्वमसि' इत्यनयोर्वाक्ययोः अपरोक्षात्मविषयत्व च समान त्वमेवात्थेति ।

सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्, भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिः । वासनाकार्य भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानिवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादिकार्य तु निवर्तते ।

अथ प्रत्यक्षविरोध परिजिहीर्षतो बाधितानुवृत्तेरसम्भवमभिप्रेत्याह—

बाधितानुवृत्तिदूषणम्

सत्यपि इति । मात्रया—न तु कार्त्स्न्येन, आत्मभेदसत्यत्वाध्यवसायादेर्निवृत्तत्वात्, बाह्येषु भेदधियः किञ्चिदिव स्थितत्वादिति भावः । भवता इत्यशक्यताहेतुगर्भम्, न हि ब्रह्मव्यतिरिक्त किञ्चित्सत्यमिच्छसीति भावः । हेतु विवृणोति—भेद इति । सामग्रीशब्द इह [1]प्रारब्धकर्मावष्टम्भपौष्कल्यसूचकः । अविद्याविनाशे कर्मवासना च कथ तिष्ठेत्, न हि मृगतृष्णिकानिवृत्तौ तदीयतरङ्गाद्यनुवृत्तिः, अत उपदेष्टृत्वाद्यनुपपत्तिश्च स्यादिति भावः । ननु मिथ्यात्वाविशेषेऽपि एकाधिष्ठानेषु भिन्नाधिष्ठानेषु च भ्रमेषु किंचिदेव केनचित् [2]बाध्यते, तद्वत्स्यादित्यत्रोक्तम्—ज्ञानोत्पत्त्यैव इति । सद्व्यतिरिक्त सर्व मिथ्येति

---

१ प्रारब्धफलकर्म (क च) २ बाध्येत पा (सु)

बाधकधीः, ईदृशज्ञानोत्पत्तौ [1]वासनास्थितिस्ते विरुद्धा। [2]न च वासनावान्तर-भेदाद्गतिः, मिथ्यात्वानपायात्। न हि 'रज्जुः' इत्यवगते सर्पाद्यन्यतमधीः [3]अनुवर्तेत। किं च निरस्तायामेव भेदवासनाया [4]बाधकज्ञानोत्पत्तिं वदतस्ते तदुत्पत्तौ कथं सा तिष्ठेत्, स्थिता काचित् केन [5]निवर्त्त्यैत, यदि ज्ञानान्तरेण, तन्न, अविशेषात्, अथ भोगक्षयात्, तर्हि ज्ञानबाध्यत्वाभावात् सत्या स्यात्, एवं कर्मापि। अद्वैतसाक्षात्कारेऽपि वासनानुवृत्तावनिर्मोक्षप्रसङ्गमभिप्रेत्याह—**ज्ञानोत्पत्तौ** इति। ज्ञानैकनिवर्त्यत्वाय **मिथ्यारूपत्वोक्तिः**, निवर्तकान्तराभावात् सत्यत्वप्रसङ्ग-[6]भीतैः ज्ञानेतरबाध्यत्वस्यानभ्युपगमात्; स्वकल्पितान्तिमभोगसंवेदनादिज्ञान[7]शतागमेऽपि तेषां पूर्वज्ञानवन्निवर्तकत्वायोगादिति भावः। **अस्याः** मूलाविद्याबाधकप्रबलज्ञानेनापि दुर्बाधाया इत्यर्थः। [8]अहेतुकविनाशस्तु न क्वापि नैगमिकैरिष्यते। तदभ्युपगमेऽपि तेषां पूर्वज्ञानवासनाविनाशादेः भ्रान्तिसिद्धत्वेन नित्यं भ्रमानुवृत्त्या पुनरपि वासनासन्ततेरनिवार्यत्वमभिप्रेत्य **कदाचिदपि** इत्युक्तम्। न हि वासनानिवृत्तिः सतः स्वरूपम्, साध्यत्वात्। अतिरिक्ता च न सत्या, अद्वैतभङ्गात्। अभावसत्यत्वेऽपि सदद्वैतं सिद्धमिति चेन्न, क्वचिद्भेदसत्यत्वे अन्यत्राप्यविशेषात् भावान्तरसत्यत्वेऽपि तद्वदेव ब्रह्माद्वैतानपायाच्चेति। 'अनिवृत्तमपि' इत्यादिनोक्तं स्वव्याघातेनोपालभते—**वासना** इति। स्वोक्तिविरोधानभिज्ञः किमन्यद्वेत्स्यतीत्यभिप्रायेण **बालिशत्वोक्तिः**। अयं भावः—छिन्नमूलम् इत्यत्र किं

---

१ च वासना पा (सु) — २ न वा वासना पा (क)
३ अनुवर्तेते पा (सु) — ४ बाधकोत्पत्तिम् पा (सु)
५ निवर्तेत पा (क, ख, घ, च) — ६ भीत्यै पा (क)
७ शतावगमेऽपि पा (सु) — ८ अहैतुक पा (सु)

मूलशब्देनाविद्या विवक्षिता, उत भेदवासना, आद्ये मूलभूताविद्याच्छेदे तत्समान-बाधकस्य संस्कारस्यापि बाधाद्भेदभ्रमो दुर्वच इत्युक्तम्। [1]द्वितीये कथं वासनोच्छेदे तत्कार्यं सन्तन्येत। यदि हेत्वभावेऽपि क्वचित्कार्यं स्यात्, तदा स्वपरमत-साधारणैः स्वाभिमतैश्चाविद्यादिभिर्विनापि तानि तानि कार्याणि स्युः। अतो नेदं यौक्तिकवाक्यमिति। बाधितानुवृत्तौ परोक्तो दृष्टान्तः छिन्नमूलत्वाभावात् [2]असमञ्जस इत्याह—द्विचन्द्र इति। तिमिरादिदोषस्य सत्यतया बाधकधीशतैरप्य-बाध्यत्वात्त्वया तस्य व्यावहारिकसत्यत्वेनाभ्युपगमात् [3]असत्यत्वेऽपि चन्द्रैकत्व-ज्ञानस्य तदधिष्ठानगोचरत्वाभावेन तद्बाधकत्वायोगाच्चेति भावः। यथा तत्र दृष्टान्ते भयादिनिवृत्त्या बाधकसाफल्यं, न तथा त्वदिष्टे स्यादिति सूचयन् 'न बन्धाय' इत्युक्तं निरस्यति—प्रबल इति। प्रमितप्रामाण्यप्रमाणबाधि-तत्वादित्यर्थः। अत एवात्र कुहकोत्पादितभयादिव्यावृत्तिः। त्वत्पक्षे तु [4]बाध्य-बाधकधियोर्द्वयोरपि दोषोत्थत्वेन ज्ञातत्वान्न बाधफलसिद्धिः। लोके बाधितानु-वृत्तेरन्यतरविस्रम्भफलहीनस्य यथावन्निरूपणार्थप्रवृत्तिहेतुत्वं च बाधकस्य फलमित्या-शयः। सर्पादिभ्रमापेक्षया भयादिकार्योक्तिः। आदिशब्देन विस्मयादिग्रहणम्। एवं भयाद्यनुत्पादकत्वमभिप्रेत्य न्यायतत्त्वे "बाधितानुवृत्तिदशाज्ञानमकिञ्चित्क-रत्वादुदासीनम्" इत्युक्तम्। तुशब्देन परोक्ताद्वैषम्यं द्योत्यते। न ह्यत्र नाश-कसामग्र्या सत्या नाश्यसद्भावः, न च हेत्वभावे कार्योदय इति। ननु भयाद्यपि क्षणिकत्वाद्भ्रमवन्न बाधकविनाश्यम्, उत्तरभयानुत्पत्तिश्च भ्रमान्तरानुत्प-त्तिवत्प्राक् सिद्धैव, तर्हि बाधतः कथं भयादिनिवृत्तिर्भाष्यते, उच्यते—बाधके

---

१ द्वितीयेऽपि पा (च)　　२ असम पा (क, ख, घ, च)
३ सत्यत्वेऽपि पा (च) असत्यत्वेऽपि वा पा (घ)　४ बाध्यबाधकयो पा (ख)

सति सामग्रीवैकल्याद्भयान्तरानुत्पत्त्यनुवृत्तिमपेक्ष्य भयादिनिवृत्तिभाषणमिति ।

अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छता कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति , भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् , तथा च श्रुतयः—" विज्ञाय प्रज्ञां कुर्वीत " " अनुविद्य विजानाति " *" [1]ओमित्येवात्मानं ध्यायथ, " " निचाय्य तं मृत्युमुखात्प्रमुच्यते " " आत्मानमेव लोकमुपासीत " " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " " सोऽन्वेष्टव्यः स विजिज्ञासितव्यः " इत्येवमाद्याः ।

' जातेऽपि ' इति पक्षस्य मन्दत्वव्यक्त्यै सिंहावलोकितेन बहुव्याख्यातृसमताया ज्ञानानुत्पत्तौ दूषणान्तरमाह—अपि च इति । कदाचिदपि—ध्यानात्प्रागिव पश्चादपीत्यर्थः, कल्पकोटिसहस्रध्यानेऽपीति भावः । ननु यज्ञादिभिः परिमितैरेवानाद्युपचितापरिमितकल्मषनिबर्हणेन ज्ञानोत्पत्तिमिच्छतामिव श्रवणादिभिर्वासनानिरासेन ज्ञानोत्पत्तिरस्यादित्यत्राह—भेदवासनाया इति । न ह्यत्र सकृत्स्मृतोऽपीत्यादिन्यायः । अदृष्टद्वारा निवर्तकत्वे निवर्त्यसत्यत्वप्रसङ्गात् । नच मन्त्रनिवर्त्यवत् व्यावहारिकसत्यत्वाददृष्ट [2]निवर्त्यत्वोपपत्तिः, तद्वदेव प्रपञ्चस्यापि तदुपपत्तौ बाधकधीगवेषणवैयर्थ्यात् । स्वरूपत एव निवर्तकत्वे तु

टि—एष अर्थानुवाद । उपनिषत्पाठस्तु ' ओमित्येव ध्यायथात्मानम् ' इत्येव । तत्पाठमभिसन्धायैव भाष्यकृद्भि श्रीमद्रङ्गरामानुजमुनिभि ' आत्मान ध्यायथ इत्यन्वय ' इति व्याख्यातम् ।

१ " ओमित्यात्मान ध्यायथ " पा (छ)

२ निवर्त्योपपत्ति पा (सु)

तादृशशक्तिवैचित्र्ये प्रमाणाभावेन भूयस्त्वादेर्बलाबलप्रयोजकत्वात्। न च भावना स्वरूपत एव वाक्यस्य सहकारिणी, परोक्षानुभव इवापरोक्षानुभवेऽपि तदन्वयव्यतिरेकादृष्टे., अदृष्टद्वारा सहकारित्वस्यानभ्युपगमात्। अभ्युपगमे तु वाक्यमनपेक्ष्य तस्यैव मनस्सहकारिण. साक्षात्कारजनकत्वोपपत्तेः। अतः कथञ्चिदपि न वाक्याद्बाधकप्रत्यक्षोदय इत्याशयः।

किमित्यादिना प्राग्विकल्पिते मतद्वये दूषितस्य दूषणान्तराण्यवधारणेन सूचयन्स्वमतपरिशेष तावदाह—अत इति। वाक्यजन्यज्ञानस्य विधेयत्वनिवर्तकत्वादेः [1]युक्तिप्रत्यक्षादिविरुद्धत्वादित्यर्थः।

विधेयज्ञानस्य मोक्षोपायत्वम्

**वाक्यार्थज्ञानादन्यदेव** इति—अय भावः [2]वाक्यार्थबोधमात्रस्योपायत्वविधाने स्वतस्तत्प्रवृत्तौ दुस्तर चक्रकम्, न हि ब्रह्मस्वरूप [3]तज्ज्ञान चाविदित्वा तज्ज्ञानकामना स्यात्। [4]तद्रहितस्य च न तदर्थोपायविधिप्रवृत्ती स्तः। न चोपायानुष्ठानमन्तरेण ब्रह्मधीसिद्धिरिति। ननु [5]स्वाध्यायाध्ययनवद्धितैषिप्रेरणया प्रवृत्तिरस्तु, मैवम्—हितैषिभिरपि निर्विशेषचिन्मात्रब्रह्मज्ञान सपादयेत्युपदेष्टव्यम्, तदा ह्येवविधब्रह्मधीसदसद्भावयोस्तदुपायानुष्ठान न स्यात्। [6]अस्मत्पक्षे तु बह्वाकारविशिष्टे ब्रह्मण्यावृत्तिनैरन्तर्यादिविशिष्टकालान्तरभाव्यतिशयितज्ञानार्थप्रवृत्तौ यथालोक न विरोधः। लोकसिद्धप्रक्रियानभ्युपगमे स्वप्रवृत्त्यादिविरोधस्स्यात्। नच नित्यप्रत्यक्षनिर्विशेषवस्तुवादिनः [7]तव वाक्यतोऽन्यतो वा तद्विषयातिशयितधीः शक्येति।

---

१ युक्तिप्रत्यक्षविरुद्ध पा (सु) २ वाक्यार्थज्ञानमात्र पा (सु)
३ तत्त्वज्ञान च पा (सु) ४ तत्र हि तस्य पा (च)
५ स्वाध्यायवत् पा (ख, घ, च) ६ अस्मिन् पक्षे तु पा (च)
७ ते वाक्यत पा (च) तव तु वाक्यत पा (सु, ख, घ)

ननु [1]मोक्षोपाये विधित्सितत्वोक्तिरयुक्ता, विधिशब्दानामिह पुरुषार्थभूतवाक्यजन्यज्ञानानुवादनिष्ठत्वात्, ध्यानादेस्तु तदर्थतया चोदनात्, न चान्यानुपपत्तिमात्रात्तदन्यत्सर्वमुपपद्यते, विविधानि च ज्ञानानि स्मृतिदर्शनादिशब्दैर्व्यपदिश्यन्त इत्यत्राह—तथा च इति । यथा वाक्यजन्यज्ञानादन्यो मोक्षोपायो "द्रष्टव्यः" इत्यादिभिर्विधित्सितः, स च ध्यानाद्यनेकशब्दोपात्तोऽपि [2]एकतया सिध्येत् तथैवेत्यर्थः । चः पारिशेष्येण सह समुच्चयार्थो वा । अत्र वेदनादिशब्दाना ध्यानादिशब्दोक्तविशेषपरताम्, उपसर्गभेदसन्विधिप्रत्ययसदसद्भावैरर्थभेदाभाव च व्यङ्क्तुमीदृशबहुवाक्योपादानम् । उपात्तवाक्यप्रकारवैचित्र्यपर इतिशब्दः । तेषा विधिपरत्वसाम्यार्थ एवंशब्दः । [3]अनुपात्तेष्वपि न्यायसञ्चारार्थम् आद्योक्तिः ।

अत्र "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञा कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य' 'विज्ञाय' इत्यनूद्य 'प्रज्ञा कुर्वीत' 'विजानाति' इति ध्यानं विधीयते । 'श्रोतव्यः' इति च अनुवादः, स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य 'मन्तव्यः' इति चानुवादः । तस्मात् ध्यानमेव विधीयते । वक्ष्यति च—"आवृत्तिरसकृदुपदेशात्" इति ।

'प्रज्ञा कुर्वीत' 'विजानाति' इत्यादौ न वाक्यार्थज्ञानादन्यत्व भातीत्यत्र

---

१ मोक्षोपायविधि पा (सु) २ अनेकतया पा (च)
३ अनुपात्तेषु न्याय पा. (सु).

"छागा वा मन्त्रवर्णात्" इति न्यायमभिप्रेत्याह—अत्र इति । श्रुतेषु तेषु वाक्येष्वित्यर्थः, निर्धारणे सप्तमी। ऐकार्थ्यमिहैकप्रयोजनत्वम्, एकविषयत्व वा । तच्चात्र [1]शाखान्तरनयपुरस्कारेण सामान्यविशेषन्यायसिद्धम्। प्रथमेन [2]आदिशब्देन "ध्यायथ" इत्यादेः, द्वितीयेन "विजिज्ञासितव्यः" इत्यादेश्च ग्रहणम्। अनुवादे तात्पर्यसिद्ध्यर्थम् अनुवाद्यस्य विधेयान्वयार्थं च ध्यानोपकारकत्वोक्तिः। तच्च ध्येयोपस्थापकत्वम्। नन्वत्र "अनुविद्य" इत्यादौ "दध्ना" इत्यादिवद्गुणविधिरस्तु, सगुणकर्मश्रवणे हि वाक्य गुणपरम् इति नीतिविदः, विशिष्टविधौ गौरवात् कर्ममात्रविधौ गुणश्रुतिवैयर्थ्यात्, कर्मपद तु विधेयस्य गुणस्याश्रयणार्पणे सार्थक स्यादिति, मैवम्—होमवदिह ज्ञानार्थस्य प्राप्तत्वे ह्यनूद्य गुणो विधीयेत, तदङ्गत्या विशिष्टविधिरस्त्विति शङ्कानिरासार्थम् 'अनूद्य' इत्युक्तम् । अय भावः—क्त्वान्तस्याख्यातान्तस्य चैकार्थ्ये पौर्वापर्यविरोधः। कस्य च केन वैशिष्ट्यम्? सजातीयाभ्यासे तु ज्ञानमभ्यस्येदित्येवालम् । उपसर्गभेदश्च विफलस्स्यात्। भिन्नार्थत्वे "विजानाति" इत्यादेरप्राप्तविषयस्य ध्यानवत्पश्चात्पठितस्य पश्चाद्भाविनि विधेये ध्याने विश्रान्तिर्न्याय्या । वाक्यार्थधीस्तु प्राप्तत्वान्न विधेयो गुणः । तत एव न तदर्थं श्रवणादि, तत्प्रधानध्यानविधानस्य युक्ततमत्वाच्च। न चान्यत्किमपि ज्ञानमिह गुणत्वेन विधेयतया शङ्कनीयम्। यदि तु 'विजानाति' इत्यादेः वाक्यार्थज्ञाने विश्रमः, तदा 'अनुविद्य' इत्यादेर्न विधेयमनुवाद्य वा ज्ञानान्तर दृश्यते। न च ध्यान तद्गुणतया विधेयम्। परोक्ष [3]प्रत्यक्ष वा वाक्यार्थज्ञान प्रति तत्साधनत्वासम्भवस्य दर्शितत्वादिति । स्थानैक्याद्विधिप्रत्यय-

---

१ शाखान्तरपुरस्का पा (सु) २ प्रथमेनाथशब्देन पा (सु)

३ 'प्रत्यक्षम्' इति (क) कोशे न दृश्यते।

[1]रहितेऽपि विधिपरत्वव्यक्त्यै बुद्धिस्थक्रमेण "प्रज्ञा कुर्वीत" इत्यस्य पूर्वं पाठः। ध्यानस्य 'निचाय्य' इत्याद्युक्तवैशद्यविशिष्टत्वादुपास्युक्तप्रकर्षविशिष्टत्वाच्चोपसर्गद्वयसाफल्यम्। अनुवादयोरप्युपसर्गद्वयमनुवाद्यस्याभ्यास स्पाष्ट्य च व्यनक्ति। "अविज्ञात, विज्ञातम्" इति [2]विज्ञानशब्दस्य "निदिध्यासितव्यः" इत्यस्य स्थाने पाठाच्छ्रवणानन्तरभाविमननविषयान्वेषणशब्दानन्तरपाठाच्च "विजिज्ञासितव्यः" इत्येतन्निदिध्यासनस्थानापन्नम्। उपायविषयविज्ञानवेदनादिसामान्यशब्दाना तव्यप्रत्ययान्तोक्तश्रवणरूपज्ञानविशेषे विश्रमः किं न स्यादित्यत्राह—**श्रोतव्य** इति। कथमत्राहेतुकस्तव्यप्रत्ययबाध [3]इत्यत्राह—**स्वाध्यायस्य** इति। अय भावः—श्रुतेरर्थपरत्वाभावाद्वा विचारस्य [4]प्रवर्तकाभावाद्वा तदवसराभावाद्वा मीमासानारभ्येति शङ्का निरस्ता। श्रोतव्य इत्यस्य च गुर्वभिगमनादौ शब्दशक्तिर्नास्ति। अतो निर्णयार्थव्यापारपरत्वे प्राप्तार्थत्वमिति। नन्वस्ति विधेयमारम्भणसशीलनरूपं मननम्। तच्च 'मन्तव्यः' इति विवक्षितु युक्तम्, [5]तत्र वेदनादीना विश्रान्तिरस्यादित्यत्राह—**श्रवण** इति। [6]अप्रतिष्ठितस्य श्रवणस्य ध्यानानुपकारित्वात्तत्प्रतिष्ठापकतयाकाङ्क्षित तदनन्तरपठित यौक्तिक मननम्। अतस्तदपि रागाद्यनुवृत्त्या प्राप्तत्वादनुवाद्यमेवेति भावः। एतेन श्रवणादित्रिक दर्शनसाधनतया विधीयत इति कैश्चिदुक्तस्य युक्तिविरोधः स्थापितः। ननु "श्रोतव्यो मन्तव्यः" इत्येताभ्यामुपदेशैकगम्यार्थश्रवणमात्र विधेयमस्तु, आहुश्च केचित्—"साख्ययोगोपदेशश्रवणादिकम्" इति, अत्राह—**तस्मात्** इति। प्राप्ताप्राप्तविवेकात्तत्सिद्धाद्वा परिशेषादित्यर्थः। एवकारः श्रवणमननयोर्ज्ञानमात्रस्य सन्प्रत्ययवाच्येच्छायाश्च व्यवच्छेदार्थः।

---

१ रहिते हि पा (क)
२ विज्ञानस्य पा (ख, घ, सु)
३ इत्याह पा (क)
४ प्रवर्तकत्वाभावात् पा (सु)
५ अत्र वेदना पा (क)
६ अप्रतिष्ठितस्य ध्याना पा (सु)

द्रष्टव्य इत्यस्यापि ध्यानविशेषणवादितया पृथग्विधितात्पर्यव्युदासार्थो वा ।
अग भाव – 'श्रोतव्यो मन्तव्यः" इत्यनयोरवैधप्रसिद्धोपकारकत्वसम्भवे तद्विपरीत-
कल्पनेग्युक्तत्वात् 'श्रोतव्य.' इत्यादेश्श्रवणादिचतुष्टयविधिपरत्वे वाक्यभेदापत्तेः,
अत्र त्रिकस्यास्याष्टदोषदुष्टतया गुरुलघुविषयतया चात्यन्तासम्भवात्क्रमभाव्युप-
कारस्य श्रवणादेस्समाधिरूपाङ्गिना समुच्चयासम्भवाद्विशिष्टविधेर्गत्यन्तराभावनिय-
तत्वात यानस्य दर्शनरूपतायाश्श्रुत्यन्तरानुसारेण साधयिष्यमाणत्वात् । अत
एव निपूर्वस्यापि ध्यायतेरिह पदान्तरस्फुटोपात्तदर्शनरूपतावैशिष्ट्योक्तावुदासीन-
त्वात द्रष्टव्य ' इत्यस्यानुवादसमभिव्याहारेऽपि स्वरसावगतविधिपरत्वप्रहाणेन
फलानुवादपरत्वकल्पनानुपपत्तेः । "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यादिश्लोकेऽपि
श्रवणादित्रिकस्य क्रमाद्दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधेयत्वे विरोधाभावाच्च
रागप्राप्तश्रवणादिपूर्वकं विधिपदान्तरोपात्तदर्शनाकारविशेषितध्यानमेवात्र विधेयमिति।
एव वेदनादिशब्दाना स्वोक्तविशेषविधिविश्रमानभ्युपगमे सूत्रविरोधमपि सूचयति–
वक्ष्यति च इति । चिन्तनार्थो हि ध्यायतिरेकविषयमसकृदावृत्त ज्ञान
वक्ति । अतो ध्यानविषये उपदिष्ट वेदन ध्यानमेवेति प्रकृतसिद्धिः । तथोपास्तिरपि
' तस्मिन्यदन्तस्तदुपासितव्यम्" इत्यादिभिरुपात्तः । अतो यज्ञादिसापेक्षत्वानु-
गुणम् 'उपदेशात्' इत्यनेनैव सङ्गृहीतम् ।

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते,
विद्युपास्योर्व्यतिरेकेणोपक्रमोपसंहारदर्शनात्—"मनो ब्रह्मेत्युपासीत" इत्यत्र
"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद", "न स वेद,
अकृत्स्नो ह्येष आत्मेत्येवोपासीत", "यस्तद्वेद यत्स वेद स मयैतदुक्तः"
इत्यत्र "अनु म एतां भगवो देवता शाधि या देवतामुपास्से" इति ।

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्, "ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्।

वेदनादिसामान्यशब्दानां ध्रुवानुस्मृतिरूपोपासने विश्रान्तिः

प्राक् प्रतिज्ञातमुपासनाख्यविशेषे वेदनादिसामान्यशब्दानां विश्रममाह—तत् इति। तत्—तदुक्तावनिर्धारितविशेषम्। इदम्—गुरुतरध्यानादिसाध्यसाधनतया विधानाद्विशेषदृष्टौ तदेकतापत्त्यर्हम्। तद्धेतु व्यनक्ति—अपवर्गोपायतया विधित्सितम् इति। उपासनमित्यवगम्यते इति, तुल्यप्रकरणस्थोपासिसमानविषयवेदनादिशब्दनिर्दिष्टत्वादिति भावः। "उपदेशात्" इति सूत्रितमेकप्रकरणस्थविशेषमन्यमपि हेतुमाह—विद्युपास्योः इति। "मन" इत्यादावुपासिरादौ, विदिरन्ते। "यस्तत्" इत्यत्र तु तद्विपरीतम्, "[1]न स वेद" इत्यत्र तूभयत उपास्तिः, "अथ योऽन्यां देवतामुपास्ते" इत्युपक्रमात्। [2]एवं मिथस्स्थानाक्रान्तिरिह व्यतिकरः। नन्वत्र 'मनो ब्रह्म' इति दृष्टिविधिः, अन्यच्च वाक्यद्वयं विद्याविशेषस्थम्।

एकत्र [3]शब्दवृत्तिर्या स्थिता सान्यत्र सञ्चरेत्।
तत्तुल्येऽपीत्यभिप्रेत्य दर्शनादिति भाष्यते ॥ २९९ ॥

'य एवं वेद' इति न शास्त्रार्थ[4]वेदनामात्रोक्तिः, विहितस्य [5]आकाङ्क्षित फलमनिर्दिश्याविहितान्यानुवादेन तत्फलोक्तेरयुक्तेः। ननु

---

१ तन्न स वेद पा (सु)
२ मिथस्स्थानापत्तिरिह पा (सु)
३ शब्दव्यक्तिर्या पा (घ)
४ वेदनमात्र पा (सु)
५ आकाङ्क्षितफलम् पा (सु)

भूमविद्योपक्रमे "स यो[1] ब्रह्मेत्युपास्ते यावन्मनसो गत तत्रास्य यथाकामचारो भवति" इति फलविशेष उक्तः । तेनैव नैराकाङ्क्ष्य स्यात्, मैवम्—तृतीय-प्रपाठकस्थस्यास्य उपासनप्रकरणभेदात्, पुनश्श्रुतिवैयर्थ्याच्च विधेयान्तरत्वे सिद्धे सन्निहितफलेनैव समन्वयोपपत्तेः । अतोऽस्मिन्नर्थवादे विदिनोपासनमनूद्य तत्फलविधिर्युक्तः । रात्रिसत्रन्यायश्चात्राभिप्रेतः । दानादिजन्या प्रथा कीर्तिः । पराक्रमादि[2]जन्या तु यशः । कीर्त्या यशसा च भाति, ब्रह्मवर्चसेन तपतीति योज्यम् । मध्यमवाक्येऽत्रेत्यनुक्तिरासन्नत्वात् । [3]"यस्तत्" इत्यादौ यस्तत् ब्रह्म वेद, यच्च ब्रह्म स वेद स वेदिता रैक्वः तद्वेद्यमेतत् ब्रह्म चेति द्वितय तवोक्त-मित्यर्थः । "गामश्व पुरुष जगत्" इत्यादिष्विव चकारानुक्तिः । नपुसक-समभिव्याहारादुक्तमिति [4]विपरिणमनीयम् । वेद्य प्रति स वेदितृत्वेनोक्त इति वा नेयम् । अथ वा यत् स रैक्वो वेद, तदेवान्यो यो वेद, एन सर्वं तदभि-समेति यत्किञ्चित्प्रजास्साधु कुर्वन्तीति पूर्वत्रान्वयः । "स मयैतदुक्तः" इत्यत्र 'एतत्' इति क्रियाविशेषणम्, स मयैवमुक्त इत्यर्थः । अस्या व्याख्या-या प्रकरणानुगुण्यात् [5]रैक्वशिष्येण भवितव्यमिति जानश्रुतेः सूच्यते । अनु-शाधि—विविच्य ज्ञापयेति यावत् । एव वेदनस्य प्रस्तुतध्यानोपासनशब्दवाच्य-त्वमित्युक्तम्, न तु ध्यानस्योपासनत्वमिहोच्यते, 'वेदनमुपासनमित्यवगम्यते, 'विद्युपास्योः' इत्यादिभाषणात् 'वेदनमुपासन स्यात्' इति प्रदर्शयिष्यमाण-वाक्यसवादाच्च । ध्यानोपासनशब्दयोरेकविषयत्व ध्यानस्य प्रतिकूलध्यानाद्या-वृत्तिश्चेह अर्थादेव सिध्यतः । यदि ध्यानमिहोपासनत्वेन शब्दतो विशेष्यते,

---

१ यो मनो ब्रह्म पा (सु)
२ जन्य तु पा (सु)
३ यस्त्यत् पा (सु)
४ विवरणमूहनीयम् पा (सु)
५ वैशिष्ट्येन पा (सु)

तदा ध्यानस्य पुनराकारान्तरोक्तौ शृङ्खला भज्येत ।

ननु ध्यानशब्दः चिन्तामात्रवाची व्यवहितस्मृतिसन्तानेऽपि स्यात्, स्मृतिमात्रे च क्वचित्प्रयुज्यते, सूत्रे च ध्यानोपासनशब्दाभ्यामसकृदावृत्तिमात्रमुक्तमित्यत्र तदभिप्रेत [1]श्रौत नैरन्तर्यरूपविशेषमाह—**ध्यानं च** इति । यावज्जीवाग्निहोत्रनयाद्वा स्वरूपेण चिरकालस्थायितया वा ध्रुवत्व स्यादिति शङ्कानिरासाय [2]सदृष्टान्तः सन्तानशब्दः। एव विच्छिन्नाविच्छिन्नवेदनसाधारणस्य ध्यानस्य [3]विशेषे विश्रम उक्तः, अविच्छिन्नासाधारण्य वा स्थापितम्। स्वस्थाने चैतत् सूत्रयिष्यति–"ध्यानाच्च। अचलत्व चापेक्ष्य" इति। "उपासनशब्दस्याविच्छिन्नविषयत्ववत् ध्यानशब्दस्याप्यविच्छिन्नविषयत्वमिह स्थाप्यते" इति तूलिका। उक्त श्रुत्योपपादयति—**ध्रुवा** इति । [4]स्मृतेर्ध्रुवत्व विसदृशबुद्धिव्यवधानरहितप्रवाहत्वम्, "तद्रूपप्रत्यये चैका [5]सन्ततिश्चान्यनिस्पृहा" इत्यादिना तथोक्तेः। यद्यपि "नाना शब्दादिभेदात्" इत्यत्र फलसयोगैक्यमात्रान्न विद्यैक्यमिति वक्ष्यते, ध्यानत्वोपासनत्वध्रुवत्वादयश्च विशेषा विद्यान्तरपठिताः, तथापि साधारणाना वेदनादिशब्दाना विशेषविषयत्वाभावे फले च तारतम्यरहिते गुरुलघूपायभेदविधिदौस्थ्यम्, गुरुलघुविकल्पायोगलक्षण च वस्तुसामर्थ्य प्रकरणाद्बलीयः, अतस्स्मृतेर्ध्रुवत्वम् । इदमेकत्र श्रुतमपि सर्वासु विद्यासु योज्यमित्यभिप्रायेण **अपवर्गोपायत्वश्रवणात्** इत्युक्तम् । **स्मृतिलम्भे**—आहारशुद्ध्यादिक्रमेण प्रस्तुतध्रुवानुस्मृतिसिद्धौ इत्यर्थः। ग्रथ्यत एभिः क्षेत्रीति ग्रन्थय.—धर्माधर्मरा-

---

१ श्रौतनैरन्तर्य पा (सु)
२ सदृष्टान्तसन्तान पा (क, ख)
३ विशेषविश्रम पा (क, ख, ग)
४ स्मृतेर्ध्रुवात्वम् पा (सु)
५ सन्ततिश्चास्य पा (सु)

गद्वेषमोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः । ते [1]च मायापाशग्रन्थितया आप्तागमोक्ताः । विप्रमोक्षः—विभज्यात्यन्तिकमोचनम् । ननु भ्रान्त्या बन्धः सर्वेष्टः, [2]तस्य कथम् अप्रमा स्मृतिर्बाधिका, भ्रान्त्यधीनकर्म[3]जन्यस्य स्वय भ्रान्तिविषयत्वासिद्धेः । भ्रमोत्थस्यापि भयशङ्काविषजन्यज्वरादेरिव बन्धस्य सत्यतया युक्तोऽयमीदृश· प्रतीकारविधिः । मिथ्यात्वपक्षेऽपि प्रायश्चित्तादिन्यायो दुस्त्यजः । अतो निवर्त्यस्य सत्यमिथ्यात्वे, निवर्तकस्य मानामानत्वे अनादृत्य चोदितत्वात् [4]स्वफलसाधनत्व ग्राह्यम् । भेदवासनायाश्च ध्यानरूपा स्मृतिर्नाशिनी त्वयैवोक्ता । तदत्र शुक्तिरजतवन्न बन्धस्य बाधः, नाशस्तु यथाविधि स्मृत्या प्रमित्या वा स्यात् । न चेय स्मृतिरप्रमाप्ययथार्था, स्वहेतुप्रमित्यनन्यविषयत्वात् । उक्त च सामान्यतः श्रीमद्गीताभाष्ये—" स्मृतिर्नाम पूर्वानुभूतविषयमनुभवसस्कारमात्रज ज्ञानम् " इति । पूर्वानुभूतविषयत्व न लक्षणप्रविष्टम्, किन्तु विषयसत्यत्वासत्यत्वयोः [5]स्वहेतुधीसामान्यज्ञप्त्यर्थम् ।

निवृत्ततदवस्थस्य तदवस्थतया स्मृतौ ।
याथार्थ्यं न प्रतिक्षेप्य भूतभाविप्रमाक्रमात् ॥ ३०० ॥

स्मृतिप्रमोषे चार्थस्य तादवस्थ्य न भासते ।
अयाथार्थ्यं कथ तत्र तत्तेदन्ताविवर्जिते ॥ ३०१ ॥

अतो मूलानुसारेण यथादर्शनमिष्यताम् ।
यथार्था चायथार्था च स्मृतिरप्यनुभूतिवत् ॥ ३०२ ॥

---

१ मायापाशग्र पा (सु)
२ सर्वेष्ट प्रथमप्रमा स्मृति पा (ख, घ)
३ विषयस्य पा (सु)
४ सफलसा पा (सु)
५ सहेतुधी पा (सु)

अन्यदृष्टिस्तथान्यत्र क्ष्वेलध्वसादिकृन्मता ।
परविद्यास्वपि ह्येषा क्वचिदशेषु गृह्यते ॥ ३०३ ॥

अतः श्रुतिस्मृतिशतैश्चोदिता स्मृतिरूपिणी ।
भाष्यते परविद्येय भवारम्भस्य निष्कृतिः ॥ ३०४ ॥

सा च स्मृतिर्दर्शनसमानाकारा,

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ "

इत्यनेनैकार्थ्यात् । एव च सति " आत्मा वा अरे द्रष्टव्यः " इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता ।

स्मृतेर्दर्शनसमानाकारत्वम्

ननु ध्यानमेवेत्याद्ययुक्तम्, तदपि धारणावत्समाध्यर्थतयोक्तम् । समाधिरेव तु दर्शनात्मकः " आत्मान पश्येत् " इत्यादिभिर्मुक्तिहेतुरुक्तः । न च योगिप्रत्यक्षमनभ्युपगतम्, तस्य बहुषु प्रदेशेषु [1]भाषिष्यमाणत्वात् इत्यत्राह—सा च इति । ध्रुवत्वविशेषिता इत्यर्थः । आकारान्तरेणापि सूत्रसूचितगत्या विशेष्यत इति व्यक्त्यै चकारः, एवार्थो वा । [2]सैव हि स्मृतिर्वैशद्यातिशयात्समाध्याख्या, न तु [3]ध्यानफलमन्यद्दर्शन [4]'पश्येत्' इत्यादिषु च विधेयमित्यर्थः । स्मृतेर्दर्शनत्वव्याघात[5]शमनाय समानत्वोक्तिः; परोक्षेऽप्यपरोक्षत्वोपचार इति भावः ।

---

१ भाष्यमाणत्वात् पा (सु, घ, क)  २ सैव स्मृति पा (सु)
३ ध्यानपरम पा (घ)  ४ 'पश्य' पा (सु)
५ दर्शनाय पा (घ)

परोक्षा चापरोक्षा च स्मृतिर्द्वेधा स्वमूलवत् ।
कृत्स्ना वा स्यात्परोक्षैव द्विधाप्यत्रापरोक्षता ॥ ३०५ ॥

विधौ च परशब्दार्थो गत्यभावेऽनुमन्यते ।
लक्षणेष्टा [1]हि दर्शादौ गौणी श्येनादिनामसु ॥ ३०६ ॥

अर्धमन्तर्बहिर्वेदि मिनुयादिति च श्रुतौ ।
मध्यदेशस्य लक्ष्यत्व सर्वत्रैव यथायथम् ॥ ३०७ ॥

नन्वत्र स्ववाक्ये ध्रुवत्व न दर्शनरूपत्व विशेषणतयोपात्तम्, यतः समाधेः पार्थक्य परिह्रियेतेत्यत्राह—**भिद्यते** इति । अत्र **ग्रन्थि**शब्द उपात्तकर्मादिव्यतिरिक्तविषयः, हृदयस्य मनसः सम्यक् प्रवृत्तिप्रतिबन्धकतया ग्रन्थयो रागाद्याः । यद्वा हृच्छब्दोक्त स्थानमयतीति हृदयो जीवः, तात्स्थ्याद्वा असौ तच्छब्देन लक्ष्यते, तस्य ग्रन्थिः पूर्वोक्तस्त्रिगुणविकारवर्गः । हृदय वा ग्रन्थिः, उपलक्षणमिदम् । यत्तु निरुच्यते छान्दोग्ये—[2]"स वा एष आत्मा हृदि तस्यैतदेव निरुक्त [3]हृद्ययमिति तस्माद्धृदयमहरहर्वा एववित्स्वर्गं लोकमेति" इति, तदुपास्यब्रह्मपरम् । न च तदेवात्र हृदयशब्दवाच्यमिति भ्रमितव्यम्, ग्रन्थिसशयादिविरुद्धधर्माध्यासात् । सर्वविषयास्ससशयाः, सर्वे वा सशयाः, सशयशब्दोऽत्र विपर्ययस्याप्युपलक्षकः । ते **छिद्यन्ते** [4]हेतूच्छेदान्न सन्तन्यन्त इत्यर्थः । **कर्माणि**—बन्धकसुकृतानि दुष्कृतानि च । प्राप्तिविरोधिक्षयस्यात्र विवक्षितत्वान्न विद्योत्पत्तिकर्मनिवृत्त्योरन्योन्याश्रयः । **परावरे**—

---

१ दर्शनादौ पा (सु)
२ स एव एष आत्मा पा (क, ख, घ, सु)
३ हृदि ह्ययम् पा (सु, क, ख, घ)
४ हेतुच्छेदात् पा (सु, क, घ)

परत्व सर्वातिशायिता, अवरत्वम्—सौलभ्यार्थैन्द्रानुजत्वाद्यैः। यद्वा "सद्ब्रह्म" "ब्रह्म दाशा" इत्याद्युक्तपरावरजन्तुशरीरके। अपरावरे वा [1]निम्नोन्नतविश्वविलक्षणे। अथ वा परा एवावरा भूत्वा यस्य स परावरः।

इदमत्राकूतम्—'दृष्टे' इत्यत्र दर्शनशब्दो न तावन्मुक्त्यवस्थाभाविदर्शनपरः, ध्रुवस्मृतिशब्दवत् ग्रन्थिमोक्षसाधनविषयत्वात्। न च साधनविषयत्वेऽपि स्मृतिदृष्ट्योरपवर्गं प्रति समुच्चयः, दर्शपूर्णमासादिवत् द्वन्द्वस्य चकारस्य वानुपलब्धः। न चात्र समुच्चयश्शक्यः, प्रक्रान्तयोगेन ब्रह्मणस्साक्षात्कर्तुमशक्यत्वात्, शक्यत्वेऽपि यौगपद्यस्यासम्भवात्, क्रमस्य च व्यवस्थापकाभावात्। न च प्राचीन ध्रुवस्मरण पश्चिम च योगिप्रत्यक्ष [2]करणतया समुच्चीयेत, धारणावत्तादर्थ्योपपत्तौ समुच्चयक्लृप्त्ययोगात्, अन्यथातिप्रसङ्गात्, ध्रुवस्मृतेर्व्यवहितसाधनत्वक्लृप्तौ श्रुतहानादिप्रसङ्गाच्च। प्रमाणफल च दर्शन न स्वरूपेणोपादातु शक्यम्, येन समुच्चित्य विधीयेत। ननु सस्कारोद्बोधफले स्मरणेऽपि समानमेतत्, अत आज्यावेक्षणन्यायात्तदुपायभूतशक्यव्यापारार्थो दर्शनविधिरिहास्त्विति चेत्, न, तथा सत्येकस्मिन्वाक्ये द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिप्रसङ्गात्, अन्ततो निदिध्यासनार्थचित्तप्रेरणस्यैव पुरुषतन्त्रस्य दर्शनोपायतया विधातव्यत्वात्, अन्यस्य चादृष्टेः। नन्वेक एव दर्शनोपायस्सामान्यतो विशेषतश्च पदद्वयोक्त इत्यपुनरुक्तिः स्यात्, हन्तैव सति समुच्चय त्यक्त्वा अस्मत्पदवीमासीदसि, "द्रष्टव्यो निदिध्यासितव्यः" इत्युभाभ्यामेकस्यैव विधेयत्वात्। अस्मदुक्ते तु ध्यान [3]वैशद्यतो विशेष्यत इति वैषम्यम्। न च दर्शनसमानाकारध्यानान्तरेण ध्रुव-

१ विश्वविलक्षणसुलक्षण पा (सु), विश्वविलक्षण सुलक्षण पा (ख), सुलक्षण पा (घ)
२ कारणतया पा (सु) ३ वैशिष्यत पा (ख, घ).

[ि]तेस्समुच्चयः, तादृशस्यान्यस्यादृष्टेः, [१]तत्कृतौ च गौरवात् ध्रुवस्मृतेर्निरपेक्षसा-[ध]नत्वश्रुतिभङ्गप्रसङ्गाच्च। न च [२]मोक्षे साध्ये साक्षात्कारस्मृत्योरनेकदोषदुष्टो [वि]कल्पस्स्वीकार्यः।

विकल्पस्य द्वेधा [अ]ष्टदोषत्वनिर्वचनम् विकल्पबुद्ध्यनुष्ठानापूर्वतत्फलबाधतः।
कोटिभ्यामष्टदोषत्व प्रयोगद्वितयेऽब्रुवन् ॥ ३०८ ॥

[३]प्रामाण्यत्यागतोऽन्यस्य स्वीकृतेस्त्यक्तसङ्ग्रहात्।
स्वीकृतत्यागतश्चान्ये [४]प्रयोगद्वितये विदुः ॥ ३०९ ॥

गुरुलघुवैषम्याच्चात्र न तत्सम्भवः, अन्यथातिप्रसङ्गात्, विषमफलेष्वेव [ह]ेतुत्वदृष्टेः। नचात्र द्वारद्वारिता, मानाभावात्। न हि श्रवणमननयोर्ध्यानोप-[का]रकत्ववत् ध्यानस्य दर्शनोपकारकत्व दृष्टम्। परोक्त [५]भावनाबलजप्रत्यक्ष तु शास्त्र-[योनित्वा]न्यधिकरणे निरसिष्यते। न चात्र श्रुतम्, एव क्रमाद्यनुक्तेः। "ततस्तु त [प]श्यते निष्कल ध्यायमानः" "ध्याननिर्मथनाभ्यासाद्देव [६]पश्येन्निगूढवत्" [इत्]यादिकमस्तीति चेत्, सत्यम्—ध्यानफल ह्येतद्दर्शनमणिमादिवत्सिद्ध्यन्तर-[म]्तु, न साधनम्, तथानुक्तेः। परविद्याप्रकरणे क्वचित्तदुक्तिस्तु तत्तत्प्रभाव-[प्रद]र्शनार्था "तमक्रतु पश्यति वीतशोकः" "पुरिशय पुरुषमीक्षते" इतिवत् ध्यान-

---

१ तत्कृतौ गौरवात् पा (मु)

[*]टि—'विकल्पबुद्ध्य' इत्येव सर्वत्र मातृकासु पाठ उपलभ्यते, 'विकल्पे बुद्ध्य' इति तु [उ]चित इति भाति।

२ मोक्षसाध्ये पा (ख, घ) ३ प्रामाण्यं त्याग पा (ख, घ)

४ प्रयोगत्रितये पा (क, ख, घ) ५ भावनाबलज तु प्रत्यक्षम् (मु)

६ पश्यति पा (मु)

साध्यतयोक्त दर्शनं मुक्तस्यास्तु, [1]ध्यानसाध्यतयोक्त दर्शनं मुमुक्षोश्चेत्, विशद-ध्यानरूपं स्यात्, तथाहि—दर्शनशब्दस्य [2]श्रावणज्ञानादिष्वप्रयुज्यमानस्य चाक्षुषज्ञानमेव हि मुख्यम्, तत्तु "न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" इत्यादिभिः [3]इह प्रतिक्षिप्तम्, अतो मनोजन्यज्ञानविशेषे दर्शनत्वोपचार इति वाच्यम्, तथासति वरं मोक्षसाधनतया कण्ठोक्तस्यैव ध्रुवानुस्मरणस्य तादृशवैशद्यविवक्षया तदुपचार इति।

ननु दर्शनशब्दः स्मृतिं साक्षात्काररूपत्वेन विशिनष्टु, मैवम्—तस्य स्मृतावसम्भवात्, मूलभेदानुसारेण सम्भवाभिमानिनामपि परोक्षानुभवसाध्यस्मृतौ तदसिद्धेः। [4]"मनसा ध्याननिष्पाद्य समाधिस्सोऽभिधीयते" इति समाधेर्ध्याननिष्पाद्यत्वोक्तिश्च विशदाविशदवैषम्यात्। उक्तं च समाधाववस्थाद्वय तस्यैव योगाङ्गत्वमङ्गित्वं च निर्वहद्भिः। अस्त्वेवमिह स्मृतिदर्शनवाक्ययोरैकार्थ्यम् तथापि स्मृतिशब्देन दर्शनमुपचर्यताम्, तन्न—मुख्यार्थबाधाबाधाभ्यां विपरिवर्तस्यै स्थापितत्वात्। किं च स्मृतिर्हि वैशद्यात्कया स्तूयेत, दृष्टिस्तु स्मृतित्वोक्त्य निन्दिता स्यात्। परोक्षज्ञाने च वैशद्यविवक्षया "तमसः पारं दर्शयति" इत्युच्यते। लोके च 'पारदर्शी, दूरदर्शी' इत्यादि। नन्वपरोक्षस्य संसारस्य दर्श

---

१ ध्यानसाध्यम् पा (सु) २ श्रवणज्ञाना पा (ख, घ)

३ 'इह' इति (सु) कोशे नोपलभ्यते

४ टि—"तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत्" इत्यत्र पूर्वार्धे 'यत्' इति विशेष्यानुर 'निष्पाद्यम्' इति क्लीबत्वेन निर्देशः।

समानयापि परोक्षया स्मृत्या कथं बाधः, न कथञ्चित्—मिथ्यात्वासिद्धेः। अपरोक्षस्यापि ज्वालैक्यदेहात्मत्वचन्द्रद्वित्वादेरनुमानादिना बाधो दृष्टः, सर्वैश्चाभ्युपगत। अत 'तस्मिन् दृष्टे' इत्यनेनापवर्गोपायविषयेण स्मृतेर्वैशद्यलाभात्तादृशी सेव समाधिरिति नाष्टमलोपप्रसङ्गश्चेति। तथापि "द्रष्टव्यः" इत्यादौ ध्यानसामर्थ्याक्षिप्तश्रवणमननयोः ध्यानार्थत्ववत् अग्र्यप्रायन्यायेन ध्यानस्यापि दर्शनार्थबुद्ध्यन्तरत्वोपपत्तेर्न दर्शनशब्दस्तद्विषयः स्यात् इति शङ्काया 'ध्यानमेव' इत्यत्राभिप्रेत विवृणोति—एवं च सति इति। [1]ध्रुवस्मृतित्वेनेव दर्शनसाम्येनापि निदिध्यासनस्य विशेषितत्वे श्रुत्यन्तरसिद्धे सतीत्यर्थः। चः शङ्कानिवृत्त्यै, स्वतः प्राप्तविधिपरत्वयुक्त्या सह स्फुटार्थश्रुत्यन्तरानुगुण्यसमुच्चयार्थो वा। अयं भावः—ध्यानस्यापि श्रवणादिवद्विधेयत्वे यज्ञादिभिरेवादृष्टद्वारेण दर्शनसिद्धिः कल्प्येत, तथा च [2]मध्यध्यानं विफलं स्यात्, भावनाबलजप्रत्यक्षानुपपत्त्या तादृशादृष्टोपकारकाभावात्। विधेयत्वे त्वेकत्र निर्णीतश्शास्त्रार्थः सर्वत्र स्वतःप्राप्त इति न्यायात् ध्रुवानुस्मृतिवाक्यवदिहापि निदिध्यासनं दर्शनसमानतया विशेष्टव्यम्। "द्रष्टव्य" इत्यत्र [3]परोक्ते फलपरत्वे तु प्रत्ययवैयर्थ्यम्। पूर्वापरवाक्येषु च "येनाहं नामृता स्याम्" "अमृतत्वस्य तु नाशास्ति वित्तेन" "[+]एतावदेव खल्वरे अमृतत्वम्" इति फलस्योक्तत्वात्तदुक्तिरत्रानपेक्षिता, वैशद्यं त्वन्यत्रोक्तमत्रा-

---

१ स्मृतित्वेनैव पा (ख, घ) २ मध्ये ध्यानम् पा (ङ)

३ परोक्तफल पा (ङ)

टि—"एतावदेव खल्वर अमृतत्वम्" इत्येव सर्वत्र मातृकासु पाठ उपलभ्यते, उपनिषत्पाठस्तु "एतावदरे खल्वमृतत्वम्" इत्येव

प्याकाङ्क्षाबलायत्तम्। अत [1] उपायपरतया 'तस्मिन् दृष्टे' इतिवद्विधेयविशेषकत्वे सम्भवति विकल्पसमुच्चयश्रुतहानादेरयोगादेकफल [2] सिद्ध्यर्थविशिष्टैकसाधनविधितात्पर्यसम्भवे पृथक् [3] फलविधिभेदस्याग्राह्यत्वात् 'दध्ना' इतिवदनूद्यविधाने विशिष्टविधेयैक्यसम्भवाच्च वैशद्यविशेषितध्यानविधिपरमिदं 'द्रष्टव्य' इत्यादिवाक्यमिति। अत एवास्य [4] युगपदेकस्य विध्यनुवादशङ्काप्यपास्ता। स्वानन्दसाक्षात्काररूपस्यात्मदर्शनस्य स्वयमेवेप्सितस्य कथं विधेयत्वमिति चोद्यं विशदस्मृतिविधानोक्त्या प्रत्युक्तम्। एतेन "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "यदा पश्यः पश्यते रुक्मवर्णम्" "तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति" इत्याद्यपि [5] यथार्हं निरूढम्।

नन्वेवं योगिप्रत्यक्षमेव लुप्येत, तत्तद्वाक्येषु दर्शनादिशब्दानां योगिप्रत्यक्षसद्भाववचनानामपि प्रत्यक्षसमानाकारविषयतया नेतुं शक्यत्वात्। न च धर्मादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वात् इत्यादिभिस्तत्सिद्धिः, ईश्वरप्रत्यक्षेण [6] अर्थान्तरापत्तेः। इन्द्रियग्राह्या इति साध्यप्रयोगेऽपि शास्त्रवेद्यस्यापि मनोविषयत्वेन सिद्धसाधनात्, इन्द्रियसाक्षात्कर्तव्या इत्यत्राप्यतीन्द्रियाणामपि अनुव्यवसायवेद्यत्ववादिनामर्थान्तरत्वेन दत्तोत्तरत्वात्, सुखादिवदाहत्य साक्षात्कार्यत्वविवक्षाया विपक्षे बाधकासम्भवेन प्रतिबन्धासिद्धेः, अन्यथा बौद्धवद्धर्मादीनां चाक्षुषत्वस्यापि साधनप्रसङ्गात्। शक्यं हि '[7] विगीतं कस्यचित् चाक्षुषं प्रमेयत्वात्' [8] इत्यादि

---

1 उपायापायपर पा (ख, घ)
2 सिद्ध्यर्थम् पा (सु)
3 फलभेदस्य पा (सु)
4 युगपदेकस्य तु विध्य पा (सु, ख, घ)
5 यथावत् इति वार्हम् पा (क, ख, घ)
6 अर्थान्तरतापत्ते पा (सु)
7 विमतम् पा (सु).
8 इति प्रयोक्तुम् पा (ख)

प्रयोक्तुम्। किं च 'योगीन्द्रियं न धर्मादिप्रत्यक्षजनकम् इन्द्रियत्वात् अस्मदादीन्द्रियवत्' इति प्रतिप्रयोगस्सुलभ इति, मैवम्—

मुक्त्युपाये हि कथिता दर्शनोक्तेरमुख्यता।
अन्यत्र बाधकाभावाद्यथाश्रुतपरिग्रहः॥ ३१०॥

सयमिना ह्यतीतानागतातीन्द्रियादिवेदनं कण्ठोक्तम्। न च स्मरणमेतत्, [1] अननुभूतविषयत्वात्। अत एव न तत्र वैशद्यमात्रेण प्रत्यक्षत्वोपचारसम्भवः। न च तत्रानुमानाद्यवकाशः, "तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति" इत्यादिभिस्तत्प्रतिक्षेपात्, "पाणावामलकं यथा" इत्यादि च निर्दिश्यते, धर्मोपचयभेदैरनधीतसूक्तकाण्डमन्त्रसाक्षात्कारश्च कीर्त्यते, "दिव्यं ददामि ते चक्षुः" इत्यादि च प्रसिद्धम्, अतो नासिद्धिः, योगिप्रत्यक्षस्य बाह्येन्द्रियाणां मनसश्च सुकृतविशेषैर्यथार्हं लोकोत्तरातिशयाधानात्। न चातिप्रसङ्गः, यथाश्रुतातिलङ्घने हेत्वभावात्, अनुमानस्य विपक्षे [2] बाधकाभावाच्च। न चानुमानतः [3] श्रुतभङ्गः, तस्यागमेनैव बाधात्, अन्यथातिप्रसङ्गात्। ननु शास्त्रं शक्ये शक्तं विनियुङ्क्ते, स्मृतेस्तु दर्शनसाम्यं न पुरुषतन्त्रम्, न च तदपि तस्याः सम्भवि, दर्शनत्ववदेवासम्भावितं च न विधिराघ्रातुमर्हति। न दृष्टाधिकारो विधिरसम्भावितदृष्टफले सति भवतीत्यत्राह—भवति इति। भावना—अनुभवजन्यस्संस्कारश्चिन्तैव वा। सा च सादरं निरन्तरं च कर्तुं शक्या। ततः स्मृतिवैशद्यसिद्धिः। दर्शनस्य रूपमिव रूपं यस्यास्सा इत्युपमानबहुव्रीहिरत्र ग्राह्यः। भीतकामुकादिप्रतिभाश्च अत्र निदर्शयितव्याः। परैरप्युच्यते—"दृष्टं परोक्षमपि ध्यायमानं साक्षाद्भाव-

---

१ अननुभूतत्वात् पा (सु) २ बाधकाबाधाच्च पा (ग)
३ श्रुतिभङ्ग पा (क)

मापन्न कामाद्युपप्लवे" इति। "वृक्षे वृक्षे च पश्यामि" इत्यादिषु भ्रान्तिमिश्रत्व दोषायत्तम्, इह तु [1] यथाश्रुतचिन्तनान्न दोषबाधाविति भावः।

यदि स्याद्भावनाभूम्ना स्मृतेर्दर्शनतुल्यता।
किमत्र [2] कर्मणा मैव [3] मानसिद्धोभयग्रहात्॥ ३११॥

वाक्यकारेणैतत्सर्वं प्रपञ्चितम्—"वेदनमुपासनं स्यात्तद्विषये श्रवणात्" इति। सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। "सकृत्प्रत्यय कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा "सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्त मोक्षसाधनमिति निर्णीतम्। "उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम्। सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः।

उक्तस्य न्यायवर्गस्य दाढर्याय सूत्रे शाब्दमार्थं च सर्वं *मुख्यभेदेन तदभिप्रायविद्भिर्विमृश्य निर्धारितमित्याह—वाक्यकारेण इति। तद्विषये श्रवणात्, [4] उपासनशब्दस्थाने वेदनशब्दस्य एकत्र अन्यत्र च प्रकरणे प्रयोगादित्यर्थः। अत्रोक्तस्य प्रायिकत्वशङ्काव्युदासाय वाक्य व्याचष्टे—सर्वासु इति। "मनो ब्रह्मेत्युपासीत" [5] इति दृष्टिविधावुक्तमपि न्यायसाम्यात्परविद्यास्वपि योज्यम्, किं पुनस्तास्वेवैकत्र दृष्टमिति व्यक्त्यै मोक्षसाधनतया विहि-

स्मृतेर्दर्शनरूपताया वाक्यकारानुमति

---

१ यथाश्रुतिचिन्तन पा (क, ख, घ) २ कर्मणामेवम् (क, घ, सु)
३ मानसिद्धयोभ पा (घ)
टि—'मुख्यभेदेन' इत्येव सर्वत्र मातृकासु उपलभ्यते, 'मुखभेदेन' इति उचितमिति भाति
४. उपासनस्थाने पा (सु) ५ इत्यत्र दृष्टि पा (सु)

नम् इत्युक्तम्। एतेनापातधीश्रवणमनननिर्णयादेर्व्यवच्छेदः। वेदनमुपासनमित्युक्तस्य [1]उत्तरवाक्यासत्त्या मन्दाना [2]पूर्वपक्षत्वशङ्कां स्पष्टोक्त्या निवर्तयितुमाह—सकृत् इति। विधिर्हि स्वतः प्रवृत्त्युन्मुखं पुरुषं प्रेरयन् स्वसिद्ध्यै प्रयाजादिशास्त्रेष्विवात्रापि सकृत् प्रवर्तयेत्, [3]विशेषवचने सति खलु[4]आवृत्तिभारस्सोढव्य इत्यभिप्रायेणोक्तम्—शब्दार्थस्य कृतत्वात् इति। विधिविषयस्य धात्वर्थस्य तावतैव पूर्णानुष्ठितत्वादित्यर्थः। उत्तरवाक्यस्थेन तुशब्देन सूचितमाह—पूर्वपक्षं कृत्वा इति। तत्प्रतिक्षेपोक्तिं दर्शयति—सिद्धम् इति। न्यायत उपासनं सिद्धमित्यर्थः। सिद्धम्—[5]सिद्धान्त इति वा। उपासनशब्दात्—न हि सकृद्बुद्धावुपासनशब्दस्य प्रख्यातिरिति भावः। एतद्वाक्यं व्याचष्टे—वेदनम् इत्यादिना। "उपासनशब्दात्" इत्यनेन वेदनमुपासनम् इति वाक्यस्यापि शब्दप्रत्यभिज्ञया सिद्धान्तपरत्वं दर्शितं भवति। ध्यानस्य ध्रुवत्वं सूत्रानुक्तमपि न्यायसाम्यात्सूचितम्। प्राक् स्वेन विवृतम्। वाक्ये तु ध्यानादभिन्नस्य [6]उपासनस्यापि तदुक्तमुपादत्ते—उपासनम् इति। दर्शनम्—स्वारसिकी लोकदृष्टिः। निर्वचनम्—निर्णायकतया प्रागुक्तं श्रुतिवाक्यम्। यद्वा दर्शनम्—प्रत्यक्षश्रुतिः। निर्वचनम्—निष्कृष्य वचनमुपबृंहणम्। तस्यैव—मुक्तिसाधनतया विहितस्यैव, न तु [7]परेष्टस्य मुक्तिसाधनहेतोरित्यर्थः। सकृदावृत्तावुपासे: प्रयोगाभावात् उपासनरूपस्यासकृदावृत्तस्य इति वाक्यस्योपासनशब्द [8]विवक्षितत्वोक्तिः।

---

१ उत्तरवाक्यस्य सत्यानन्दानाम् पा (ख, घ) २ पूर्वपक्षोक्तत्व पा (मु)
३ विशेषवचने खलु पा (ख) ४ आवृत्तिभर पा (मु)
५ सिद्धान्तम् इति (क) ६ उपासनस्य तदुक्तम् पा ( )
७ परेष्टमुक्ति पा (ख) ८ विवक्षितोक्ति पा (मु)

ननु एतत्सर्वं प्रपञ्चितम् इति पूर्वोक्तम्, तत्र दर्शनरूपत्व न दृष्टमित्यत्र तस्यानुक्तस्यापि तदुक्ताभ्यामावृत्तिरूपत्वध्रुवत्वाभ्या तुल्यन्यायत्वव्यक्त्यर्थम् अन्यविधानार्थं चानुभाषते—सेयम् इति । ध्यानत्वोपासनत्वाभ्यामसकृदावृत्ता वाक्यान्तरेणोक्तध्रुवत्वविशिष्टा चेत्यर्थः । प्रतिपादिता—दर्शनरूपत्वमपि वाक्य-कारेणार्थादुक्तमिति भावः । यद्वा—न्यायसाम्यादभिप्रेतमिदमस्माभिः प्रागुक्त-मिति । ननु यद्यप्यन्यस्यान्यत्व [1] न विधातु शक्यम्, स्मृतिदर्शनयोश्च सामग्री-नियमात् विरुद्धजातीययोरन्यत्रैक्यमसम्भवि, तथापि सस्कारमात्रजन्ये स्वप्नज्ञाने अदृष्टविशेषसहकारात्साक्षात्काररूपत्वमिवात्रापि चक्षुर्जन्यत्वासम्भवेऽपि तदविनाभूत-प्रत्यक्षत्वेऽपि ध्रुवानुस्मृतेर्धीत्वमात्रसाम्यात् दर्शनशब्दोपचारः कथ न स्यादित्यत्राह —दर्शनरूपता इति । प्रत्यक्षतापत्तिः, न तु साक्षात्प्रत्यक्षत्वम्, असम्भ-वात् । अय भावः—स्वप्नधीरपि न तावन्मुख्यदर्शनम्, चक्षुर्व्यापाराभावात् । कि तु तत्र बाह्यकरणवृत्तिनिरोधे सति अनन्यसञ्चारिणा मनसा [2] सस्कारपटिम्ना प्रागनुभूतेषु विशदस्मृतिराधीयते, [3] तदतिरिक्तधीकल्पने अनन्यथासिद्धहेत्वभा-वात् । तत्र चक्षुराद्यजन्येऽपि तज्जन्यत्वधीः [4] असंसृष्टे ससृष्टधीश्च दोषवशान्मान-सभ्रान्तिः । सन्ध्याधिकरणानुरोधे तु सस्कारमात्रजन्यत्वा [5] भावादसङ्कीर्णं दर्शनत्वम्, अतो न स्वप्ननिदर्शनेन प्रस्तुते प्रत्यक्षत्वक्लृप्तिश्शक्या । धीत्वमात्रेण दर्शनसाम्यादुपचारश्च वाच्यासन्नतमस्तुत्यनुगुणविशेषसिद्धौ न युक्त इति ।

एव प्रत्यक्षतापन्नामपवर्गसाधनभूता स्मृति विशिनष्टि—"नायमात्मा

---

१ विधातु न शक्यम् पा (सु) २ सस्कारमहिम्ना पा (सु)

३ तदतिरिक्तकल्पने पा (सु, ख) ४ असस्पृष्टे सस्पृष्टधी पा (सु)

५ सम्भवादसङ्कीर्णम् पा (क)

प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते, तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति, यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति, यथायं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥"

इति, "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति।

ननु "नायमात्मा" इत्यादौ श्रवणादित्रिकं प्रतिषिध्य अपर्यनुयोज्यस्वतन्त्रवरणमात्रेण तल्लाभ इत्युक्तम्। तस्मात् "दैवमेव[1]वरं मन्ये पौरुषं तु निरर्थकम्"

ध्रुवानुस्मृतिरूपोपासनस्यैव भक्तिरूपत्वम्

इति न्यायादुक्तं सर्वं वितथमित्यत्र सूत्रवाक्ययोर्ध्रुवत्वादिविशेषितायाः स्मृतेरुपासनशब्दार्थतयाभिप्रेतं भक्तिरूपत्वविशेषणमेव तत्र विवक्षितमित्याह—**एवम्** इति। सामान्यशब्दानां सूत्राद्युक्तेन विशेषविश्रमप्रकारेणेत्यर्थः। **प्रत्यक्षतापन्नाम्** इत्येतत् वक्ष्यमाणस्य भक्त्यात्मकत्वस्य

---

१ परम् पा (क, ख, घ)

न्यायसाम्यसूचनार्थम् । अहेतुकवरणमयुक्तम्, तस्यादिमत्त्वे निर्हेतुकत्वायोगात् । अनादित्वे मुक्तेरप्यनादित्वापातात्, मुक्त्युपायविधेश्च वैयर्थ्यप्रसङ्गात्, जीवव्यापाररूपभेदविशेषनिषेधपरस्य वैषम्यनैर्घृण्यनिषेधकसूत्रादेः [१]विरोधापत्तेश्चेत्यभिप्रायेण अपवर्गसाधनभूताम् इत्युक्तम् । फलान्तरार्थोपास्तिपरत्वशङ्का चानेन निरस्ता । परो ह्यात्मात्र लभ्य इष्यते । विशिनष्टि—न तु प्रमाणप्राप्त निवर्तयतीत्यर्थः । अन्यथा उपायान्तरविधानवैयर्थ्यम्, "मत्वा धीरो न शोचति" "प्रज्ञानेनैनमाप्नुयात्" इति पूर्वापरविरोधश्च स्यात् । नायमात्मा श्रवणमुपात्तम् । मेधाशब्दश्च ध्यानार्थः स्यात्, "मेधामनीषे मा भूतस्य भव्यस्यावरुद्ध्यै" इति श्रुत्यनुसारात् । "धीर्धा इति च निघण्टुः । पारिशेष्यात्प्रवचनशब्दः श्रवणध्यानसहो प्रोच्यतेऽनेनेति करणव्युत्पत्तेः । शिष्यमननार्थगुरुप्रवचनेन वा क्षणा [२]प्रवचनहेतौ वा तत्कार्योपचारः । ननु स्वरूपनिषे तद्विधायकत्वम्, [३]अत्र च क्वचिदङ्गाङ्गिप्रतिषेधाद्वैयर्थ्यम्, तत्प्रतिषेधाद्विरोध इति शङ्काया श्रवणादिवैयर्थ्यप्रसङ्ग च परिहर स्मृतिविशेषकत्व व्यनक्ति—अनेन इति । यथा "न पृथिव्याम निषेधस्य हिरण्यवैकल्यपरिहारार्थतया हिरण्योपहितत्वविधौ तात्पर्यम्, पृथिव्या इव श्रवणादेर्यथार्ह प्रणाड्या साक्षाच्चावश्यभावित्वात्प्रीतिवैकल्य धमुखेन त्रिष्वपि प्रीतिविशेषविधौ तात्पर्यमित्यभिप्रायवान् केवलशब्दः । "नान्तरिक्षे न दिवि" इत्यभागिप्रतिषेधेन सह पठितः "न पृथिव्याम्"

१ विरोधापत्तेरित्यभि पा (क, ख, ग), २ प्रवचनहेतौ तत्कार्य पा (क, ख, ग)
३ अत्र क्वचिद पा (क, ख, घ)

प्राप्तप्रतिषेधः [1]यथा–केवलपृथिव्या अन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधानत्ववैशिष्ट्यविधौ विश्राम्यति, तथानुपायभूतश्रवणमननाभ्यां सहोपायभूतनिदिध्यासनस्य प्रतिषेध. केवलनिदिध्यासनस्य श्रवणादिवदनुपायत्वोक्तिमुखेन भक्त्यात्मकत्वविधौ पर्यवस्यतीति। अनियमेन यथेष्ट स्वतन्त्रवरणशङ्काव्युदासाय यद्वृत्तानूक्तिबलेन नियतविषयवरणव्यक्त्यर्थं **यमेव** [2]इत्युपादानम्, वैषम्यादिदोषानाघ्रातसर्वसुहृद्वरणस्य [3]नियतविषयत्वायोगात्। [4]'यदाग्नेयः' इति वाक्यस्थभवतिवत्, **वृणुते** इत्यस्य प्रयोजकव्यापारविधौ तात्पर्यं लप्स्यमानवरणप्रयोजकव्यापारवता भवितव्यमिति। ननु हिरण्योपधानस्य पृथिवीस्थत्वावश्यभाववदेतद्वाक्यस्थयद्वृत्तव्यङ्ग्यवरणीयताहेतुगुणविशेषस्य ध्रुवानुस्मृतिसम्बन्धनियमादृष्टेर्न तस्यास्तेन वैशिष्ट्यलाभ इत्यत्राह–**प्रियतम** इति। [5]फलान्तरार्थभक्त्याभासव्यवच्छेदार्थं तमप्प्रयोगः। हिः शास्त्रतो लोकतश्च परावरपुरुषस्वभावप्रसिद्धौ। नन्वेतावतापि वरणीयस्य प्रियतमत्वापादकः कश्चिदन्यो व्यापारस्सिध्यतु, ध्रुवानुस्मृतेर्विशेषितत्व तु न लब्धमित्यत्राह–**यस्य** इति। स एव न सुकृतान्तरवान्, न च केवलध्रुवानुस्मृतिमान्, नापि निर्व्याजप्रियः कश्चिदिति भावः। **अस्य**— "समोऽहं सर्वभूतेषु" इत्यादिना स्वेनैवोक्तस्वभावस्येति यावत्। अय भावः— अन्येषां स्वप्रीतिहेतुव्यापाराणां स्वलाभार्थवरणहेतुत्वाभावात् [6]स्वविषयनियतात्यन्तिकप्रीतिमानेव परस्य प्रियतमो भवन् स्वप्रापणाय वरणीयरस्यात्। इय च निरतिशयप्रीतिरूपा बुद्ध्यवस्था मुक्तिसमुत्पादने विकल्पसमुच्चयविद्वेषिणी अनन्यगतिक-

---

१ 'यथा' इति (क, ख, घ) कोशेषु नोपलभ्यते
२ इत्याद्युपा पा (क, ख, घ)
३ अनियतविषय पा (ङ)
४ यदाग्नेयवाक्यस्थ पा (क, ख, घ)
५ फलान्तरार्थिभक्त्या पा (ङ)
६ स्वविषयक पा (ङ)

प्रमाणवशात्मुक्तिसाधनतया स्थापितध्रुवानुस्मृतिम् [1] आश्रयन्ती ता विशिनष्टि इति। ननु स्वशेषतया नित्योपात्तस्य किमद्य वरणम्, [2] सर्वव्यापितया नित्यप्राप्तस्य कि मेदानीं लभ्यत्वम्, प्रियतम एवास्य वरणीय [3] इति च कुतस्त्यमित्यत्र तत्सर्व-मुपबृहणेन स्पष्टयति—यथा इति। अयम्—भगवति निरुपाधिक [4] भोग्यताविर्भा-वेण निरतिशयप्रीतिमान्। अत एव प्रियतम आत्मानं प्राप्नोति—रमते [5] स्वात्मनि। प्रसेदुषस्तस्यापवर्गाव्यवहितहेतुभूतबुद्धियोगादिप्रदानेऽन्येषामिव परसा-पेक्षत्व नास्तीति व्यक्त्यै स्वयमेव इत्युक्तम्। उपासितुरचिन्त्यमेव हितमाचरतीति वा सूच्यम्। भगवतैव—"यमेवैष वृणुते" इति वरणकर्तृतया श्रुतेनैव। एतेन स्वतस्सर्वज्ञतया परमाप्तत्वमपि व्यज्यते। सततयुक्तानाम्—सततयोगमाशंस-मानानाम्, "आशसाया भूतवच्च" इति क्तः। सततयुक्ताना भजताम् इत्यनेनैवोपासकबुद्धेः प्रीतिरूपत्वस्य सिद्धत्वात् प्रीतिपूर्वक ददामि इत्यन्वयः।

उपचारापचाराभ्या प्रीतिद्वेषौ [6] परस्य न।
निमित्तशक्त्या तु फल तयोरिति नयोज्झितः॥ ३१२॥

वरण चोन्निनीषा चाधोनिनीषा च शासितुः।
श्रुतत्वादनिषिद्धानि तत्तत्कर्मफलार्पणात्॥ ३१३॥

कस्यचिद्वरणीयतानिदाने प्रियतमत्वे श्रुत्यभिप्रेतसतत [7] युक्तशब्दोक्तश्च

---

१ आश्रयति पा (मु)
२ सर्वव्यापितया प्राप्तस्य पा (क, ख, घ)
३ इति कुतस्त्यम् पा (क, ख, घ)
४ भोग्यताविभावेन पा (क, ख, घ)
५ स्वात्मानम्, पा (क, ख, घ)
६ परस्य च पा (मु)
७ युक्तशब्दा हेतु पा (मु)

हेतुस्तत्रैव विवृत इत्याह—**प्रियो हि** इति। अत्यर्थम्—अत्यभिधेयम्, मयापि दुर्वचमिति भावः। अत्र वरण मामय प्राप्नुयादिति [1]अमोघस्सङ्कल्पः। [2]अत्र लभ्यत्व चास्य "[3]विवृणुते" इत्यनेनाभिप्रेतम्, निवृत्तप्रतिबन्धनिरुपाधिकानुभवविषयत्वमित्यर्थादुक्त भवति। अत्र सोपबृंहणयापि श्रुत्या ध्रुवानुस्मृतेः प्रीत्यात्मकतया विशेषितत्वमनभिव्यक्त व्यनक्ति—**अत** इति। लोकानुसारात्, उपात्तश्रुतिस्मृतितात्पर्यवृत्त्या चेत्यर्थः। **अत्यर्थप्रिया**—अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना अयुक्तदशायामपि "या प्रीतिरविवेकानाम्" इति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता। विषयविशेषायत्त हि सर्वत्र विषयिणो ज्ञानस्य प्रीतिरूपत्व प्रीतिविषयत्वं चेत्यभिप्रायेण स्मर्यमाणात्यर्थप्रियत्वोक्तिः। वरणविवरणयोः कर्तुः तत्कर्मणो वरणीयात् आर्थी [4]प्राकरणिकी व्यावृत्तिः **परेण** इति दर्शिता।

**एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते—"तमेव विदित्वाति मृत्युमेति" "तमेव विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।"**

**"नाहं वेदैर्न तपसा न दानेन न चेज्यया।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मा यथा॥**

---

१ अमोघसङ्कल्प पा (सु) २ अलभ्यत्व च पा (सु, ख, घ)
३ "वृणुते" पा (सु) ४ प्राकरणी च पा (सु)

भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।" इति ।

ननु "शेमुषी भक्तिरूपा" इति पुराणादिप्रसिद्ध भक्तेरुपायत्व [1] प्रक्रान्तम् । "ध्यानोपासनादिशब्दवाच्यम्" [2] इत्यत्र आदिशब्देन भक्तिशब्दोऽपि विवक्षितः, उपात्तासु श्रुतिषु तु न तद्गीरस्ति, अतः कथमविरोधस्तत्राह—**एवंरूपा** इति । उक्तशृङ्खलाक्रमेण विशेषितेत्यर्थः । प्रतिज्ञामात्रमेतदित्यत्राह—**उपासन** इति । ध्रुवानुस्मृतेः प्रीतिरूपत्वेन उपासनशब्दवाच्यतया च विशेषणात्, "स्नेहपूर्वमनुध्यान [3]भक्तिरित्यभिधीयते" इति तल्लक्षणानुरोधात्, "सेवा भक्तिरुपास्तिः" इति पर्यायपाठात् शब्दभेदेऽप्यैकार्थ्यसिद्धौ विधेयभेदाभावान्न विरोधप्रसङ्ग इति भावः । वेदनादिशब्दाना भक्तिपर्यवसायित्वमुपबृंहणोपबृंहणीययोः मिथः प्रतिक्षेपकत्वप्रसङ्गरूपयुक्त्यन्तरेण दृढीकृतमित्याह—**अत इति** । इद फलरूपहेतुपरम्, वेदनोपासनादिशब्दैर्भक्तेरेवोक्तत्वादित्यर्थः । अन्यथा श्रुतीनामिव श्रुतिस्मृत्योरपि मिथो विरोधस्स्यादित्यभिप्रायवानेवकारः । **एवम्**—श्रुतौ वेदनव्यतिरिक्तः स्मृतौ तु भक्तिव्यतिरिक्तश्चरमोपायो नास्तीत्युक्तप्रकारेणेति यावत् ।

ननु "तमेव [4] विदित्वाति मृत्युमेति" इति श्वेताश्वतरवाक्य शिवादिशब्द-
श्वेताश्वतरोपनिषद समभिव्याहाराद्रुद्रविषयम्, "तमेव विद्वान्" इति तु महापुरु-
परमपुरुषविषयत्वम् षविषयम्, तत्र चात्र च "नान्यः पन्था अयनाय" इत्या-

---

१ प्रक्रान्त पा (क) २ इत्यादिशब्देन पा (क, ख, घ)
३ भक्तिरिति तल्लक्षण पा (क, ख, घ) ४ 'अति मृत्युमेति' इति पाठ (क, ख, घ) कोशेषु न

म्नातम् , अतो मिथो व्याघात इति मन्दशङ्कापनुत्त्यै तदुभयवाक्योपादानम्। अय भावः—"वेदाहमेत पुरुष महान्तम्" इत्याद्यैः पूर्ववाक्यैः "महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः" "सहस्रशीर्षा पुरुषः" इत्याद्यैरुत्तरवाक्यैश्च सत्त्व-प्रवर्तकस्यानन्यपरपुरुषसूक्तोदितस्य महापुरुषस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञया शिव-महेश्वरादिशब्दाना तत्परत्वावश्यभावेन ऐन्द्रीन्यायेन रूढिपरित्यागस्य न्याय्यत्वात्, "सर्वश्शर्वश्शिवः स्थाणुः" इति भगवन्नामपाठात्, शिवशब्दस्य च मङ्गल्यादौ [१] रूढत्वात्, प्रसिद्धिप्रकर्षस्यात्रोक्तरीत्या नैष्फल्यात्, अनन्यथासिद्धनारायणानु-वाकसौबालमहोपनिषदादिप्राबल्यात् "शाश्वत शिवमच्युतम्" इतिवन्महापुरुष-विषयत्वावश्यभावात्, "तस्मात्सर्वगतश्शिवः" इत्यस्यारम्भे "सर्वाननशिरोग्रीव-स्सर्वभूतगुहाशयः" इति सहस्रशीर्षत्वादिप्रत्यभिज्ञानात्, "सर्वव्यापी च भग-वान्" इति भगवच्छब्दस्य महापुरुषरूढत्वस्थापनात्, निगमनस्य प्रस्तुतशेषतया तदविरोधेन नेयत्वाच्च विगीत पुरुषसूक्तोक्तविषयमेवेति । अत्र "नाहम्" इत्यादेः वेदतपःप्रभृतीना साक्षादुपायत्वाभावे तात्पर्यमिति न तद्विरोधः। "भक्त्या त्वनन्यया" इत्यादेश्च [२] पर्वभेदवतैव भक्तिरूपज्ञानेन ज्ञानान्तरादेः साध्यत्वे तात्पर्यान्नात्माश्रयादिप्रसङ्गः । "पुरुषः स परः" इत्याद्युपादानस्य [३] न पूर्वेण कृतकरत्वम्, तदप्रतिपन्नख्यापनात्। अय खल्विहाभिप्रायः— "तमेव विद्वान्" इत्यत्र "आदित्यवर्ण तमसः परस्तात्" इति यत्पूर्ववाक्ये श्रुत तदेव "अणोरणीयासमनुस्मरेद्यः" इत्यारभ्य अचिन्त्यरूपत्वादित्यवर्णत्वो-

---

१ च रूढत्वात् पा (क, ख, घ)  २ पूर्वभेदवतैव पा. (ख)

३ पूर्वेण न कृत पा (क)

क्त्या प्रत्यभिज्ञापितम्। "धाता पुरस्तात्" इत्युक्त च "सर्वस्य धातारम्" इति दर्शितम्। [1] अतः श्रुतौ विदिनोक्तमिहानुस्मरतिना विवृतम्। "भक्त्या युक्त" इति चानन्तर विशेष्यते। अतो भक्तिरूपा ध्रुवानुस्मृतिः श्रुतौ विदिना विधीयत इति गम्यते। यद्यप्यत्र यद्वृत्तावृत्तिवशात्पुरुषार्थान्तरसाधनविषयत्व-मेव युक्तम्, तथापि समानन्यायतया मोक्षार्थविदेरपि भक्तिविश्रमसिद्धिस्स्वी-कार्या। तत्रैव च "पुरुषस्स परः" इत्यादिना मोक्षार्थश्रौतविदेरपि तद्विशेष-परत्व व्यञ्जयति। [2] "यमेवैष वृणुते तेन लभ्य" इति श्रुतिसम्पुटनिगूढ चात्रोद्घा-टितम्। अत्र हि ज्ञानिना प्राप्यान्तरवत्प्रापकान्तरमपि सविशेषणोक्त्या व्युद-स्तम्। श्रुत्युक्तप्रत्यभिज्ञया प्राप्यैक्यवदुपायैक्यमपि हि युक्तम्। अतो विदि-स्थाने ध्यायत्युपासिवद्व्रजतिरप्यत्र विशेषकतया प्रयुक्त।

पुसूक्तभगवद्गीते प्रमाणतम[3]समते।
न मिथो बाधमर्हेता नैकार्थ्ये स्मृत्यनादर. ॥ ३१४ ॥ इति।

ननु "भक्त्या मामभिजानाति" इत्यादौ भक्तिसाध्येन ज्ञानेन परप्राप्ति-र्गीता, मैवम्—तत्रापि "ततो मा विशते" इति भक्तेरेव प्राप्तिहेतुत्वेन पराम-र्शात्, अन्यथा 'ततः' इत्यस्य नैरर्थ्यात्। अतो "भक्त्या प्रवेष्टुम्" [4] इत्युक्त्यैकार्थ्यम् ॥

एवरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादिकर्माणीति "यज्ञादि-श्रुतेरश्ववत्" इत्यभिधास्यते। यद्यपि "विविदिषन्ति" इति यज्ञादयो विवि-

---

१ तत्र श्रुतौ पा (छ)   २ य विवृणुते पा (क, ख, घ)
३ समते पा (क, ख, घ)   ४ इत्युक्तैकार्थ्यम् पा (छ, क, ख)

दिषोत्पत्तौ विनियुज्यन्ते, तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यामाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च— 'आप्रयाणात्तत्रापि हि दृष्टम्" "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "सहकारित्वेन च" इत्यादिषु ।

ननु उपात्तश्रुतिस्मृतिस्वारस्यात् [१] वेदनानुवचनयज्ञादिनिरपेक्षा भक्तिरेव मुक्तिसाधनमस्तु, ततश्च न कर्मविचारवृत्तत्व सिध्येदित्यत्राह—**एवंरूपाया** इति । सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धाया इत्यर्थः । श्रुतिसूत्रयोः विविदिषाविषयत्व प्रकरणतोऽर्थतश्च प्रत्यूढमित्यभिप्रायेण ध्रुवानुस्मृतेः इत्युक्तम् । **अभिधास्यते** । सूत्रकृता अस्माभिश्च समर्थयिष्यत इति भावः । **विविदिषन्ति** इत्यस्य सन्निधौ "मनसैवानुद्रष्टव्यम्" इति विशदवेदन विहितम् । "एतमेव विदित्वा मुनिर्भवति" इति स्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्तराकाङ्क्षा, न तु तदुभयरहिताया विविदिषायाः । विविदिषासाधनत्वेन विधान च दुर्वचम् । न हि 'यागेन स्वर्गं जिगमिषति' इत्युक्ते यागस्य जिगमिषासाधनत्व स्यात्, इह च वेदनेच्छाविरहे विविदिषाकामत्वस्यासिद्धेः, तत्सम्भवे तदुपायानपेक्षण, वेदनेच्छया च विविदिषाकामना, तया यज्ञाद्यनुष्ठान, तेन विविदिषोत्पत्तिरिति चक्रक स्यात् । अत्र पर्वसङ्कोचेन आत्माश्रयम्, अन्योन्याश्रय च केचिदूचुः । न चात्राज्ञातसुकृतनीतिः, सावधानकृच्छ्रसाध्यत्वाद्य-

(कर्मणा विविदिषाया धनत्वेनोपयोग इति पक्षस्य निरासः)

---

१ वेदानुवचन पा (क)

ज्ञादेः । अतः 'असिना जिघांसति' इत्यादिष्विवानुपपत्त्या नेच्छासाधनत्वेनान्वयः ।

साध्येच्छया विना क्वापि साधनेच्छा न सिध्यति ।
अतो विविदिषार्थत्वायोगाद् [1]विद्यर्थता त्विह ॥ ३१५ ॥

अपवर्गाभिलाषात्तत्साधनेच्छापि सिध्यति ।
अतो वेदनकामस्य युक्त तत्साधने विधिः ॥ ३१६ ॥

भक्तिरत्र फलत्वेन प्रकृत्या परिमृश्यते ।
अधिकारतया ख्याप्या तदिच्छा प्रत्ययेन तु ॥ ३१७ ॥

ननु अदृष्टस्य [2]सांसारिकसर्वकार्ये [3]हेतुत्वमेवैष्टव्यम्, अन्यथा [4]विषमसुखदुःखादिहेतुभूतविचित्रेच्छोत्पत्तेः कदाचित्तदनुत्पत्तेश्चायोगात् । अत इच्छामात्रस्य साध्यत्वे वेदनेच्छाया अपि तथात्व तत्खण्डन सर्वतन्त्रविरुद्ध स्यात् । तत्रैव प्रत्युक्त श्रुतप्रकाशिकायाम्—"भोगादृष्टोद्बोधितपूर्ववासनासचिवात् विषयवैलक्षण्यज्ञानात् इच्छोत्पत्त्युपपत्तेः" इति ।

भोगार्थेन ह्यदृष्टेन पुम्भिरप्रार्थितान्यपि ।
अन्तरस्थानि कार्याणि स्युः फलप्रदबुद्धितः ॥ ३१८ ॥

तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैः यज्ञादिभिः तद्भावयेदिति योगविधिः । ननु भक्त्यर्थोपायविधावपि त्वदुक्तचक्रकादिप्रसङ्गस्स्यात् । न

---

१ वित्त्यर्थ पा (मु, ख, घ)
२ मासारिकस्य सर्व पा (क)
३ हेतुत्वमेष्टव्यम् पा (मु ख, घ)
४ विषमदु खादि पा (क)

ध्यान—मक्तेरुपचयम् अनुवृत्ति चापेक्ष्य तद्विधानात्, वेदनसाधनविधावपि न विरोध, मामान्यतो विदितेऽपि विशेषतो बुभुत्सया [1] प्रवृत्तेः। न च विशेषेऽपि विदिताविदितविकल्पानुपपत्तिरिति वाच्यम्, [2] तत्रापि बुभुत्सा-प्रश्नादिघटितं वादादौ प्रवृत्ते , अन्यथा पामरपरीक्षकविरोधात्। अथैवमुत्पन्न-विविदिषस्य तदनुवृत्तिकामनया तदुपायविधिः [3] इत्युच्येत, तत्रापि फलवैषम्या-भावात् [4] तदन्वारोहात् परोक्तवेदनस्य प्रागेव निरस्तत्वात्। स्वोक्तब्रह्माकारविशिष्ट-वेदनेच्छानुवृत्त्यै यावज्जीव कर्मणोऽनुष्ठेयत्वमाह—**यद्यपि** इति। परोक्तविवि-दिषामात्रसाधनत्वे त्वन्वारोह इति पक्षे तु विविदिषानुवृत्त्या प्रत्युत्तर कथञ्चिन्ने-यम्। **तस्यैव**—विविदिषागोचरस्यैव। न ह्येतद्वेदन यागादिवत् अपूर्वा-दिवद्वा सकृदुत्पन्न सान्तर वा साधनमित्यभिप्रायेण **ध्यानरूपत्वोक्तिः**। **अहरहः** इत्यादिक निरन्तरस्याप्येकाहसाध्यत्व [5] दर्शपूर्णमासादिवद्दिवसान्तरित-साध्यत्व च व्यवच्छिनत्ति। [6] आप्रयाणादनुवृत्तिवचन सवत्सराद्यवधिकप्रतिदि-नकर्तव्यत्वव्युदासार्थम्। **अभ्यासाधेयातिशयस्य** इत्यनेन दृष्टोपकारश्चास्तीति व्यज्यते। **तदुत्पत्तये**—अनुवृत्तेरिष्टतया यज्ञादिसाध्यत्वेनाभिमतविविदिषोत्पत्तय इत्यर्थः। **सर्वाणि** इत्येतद्यथार्ह विभाज्यम्। **यावज्जीवम्** इत्यनेन जन्मान्तर-शतेत्यादेः प्रागुक्तस्योपालम्भः। विविदिषाया जातायामपि मध्ये कर्मणा त्यागो न युक्तः; विविदिषाविच्छेदे वेदनविच्छेदप्रसङ्गात्। न हि सकृदुत्पन्नया विविदिषया वेदनानुवृत्तिः सिध्येत्, सकृद्बुभुक्षयेव भोजनानुवृत्तिः। प्राचीन-

---

१ प्रवृत्त पा (सु) २ त्वयापि केन बुभुत्सा पा (क, ख, घ)
३ इत्युच्यते पा (क) विधिरुच्यते पा (सु) ४ तदन्वारोहक पा (ख, घ)
५ दर्शपूर्णमासवत् पा (क, ख, घ) ६ आप्रायणादनु पा (क, ख, घ)

सुकृतभूम्नानुवृत्तिसम्भवेऽपि पाक्षिकविघ्नशान्त्यै प्रवर्तितव्यमिति भावः । पूर्वं वेदनस्य ध्यानोपासनादिरूपत्वे सूत्रं दर्शितम्, अथ अहरह [1] आप्रयाणादनुवर्तनीयत्वे तद्वदेव तदङ्गकर्मानुवृत्तौ च सूत्राणि सन्तीत्याह—**वक्ष्यति च** इति । सूत्रैरेव तत्तद्विषयवाक्यान्यपि सूच्यन्ते । एतेन स्वोक्तानभ्युपगमे सूत्रादिविरोधो दृढीकृत । "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यनेनैव कर्मणो यावदायुरनुष्ठेयत्व सिद्धम्, "स खल्वेव वर्तयन् यावदायुषम्" इति वाक्यस्य दृष्टमित्यनेन विवक्षितत्वात् । तत्र च "कुटुम्बे शुचौ देशे" इत्याद्युक्तधर्मानुवृत्ते. 'एव वर्तयन्' इत्यत्रानदितत्वात् । "यावज्जीवमग्निहोत्रं जुहोति" इति नियतस्यापि [2] विद्याङ्गत्वज्ञापनाय "अग्निहोत्रादि" सूत्रोपादानम । "विहितत्वाच्चाश्रमकर्मापि" इत्याश्रमाङ्गतयोक्तस्य कथं विद्यार्थत्वमित्यत्र विनियोगपृथक्त्वव्यञ्जनाय "सहकारित्वेन च" इति सूत्रग्रहणम । आदिशब्देन "सर्वथापि त एवोभयलिङ्गात्" इति कर्मणा विद्याश्रमाङ्गत्वे तन्त्रानुष्ठानसूचकसूत्रसङ्ग्रहः ।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च" इति । विवेकादीना स्वरूप चाह—"जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" इति । अत्र निर्वचनम्—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति । "विमोकः कामानभिष्वङ्गः" इति । "शान्त उपासीत" इति निर्वचनम् । "आरम्भणसंशीलन पुनःपुनरभ्यासः" इति । निर्वचन च स्मार्तमुदाहृत भाष्यकारेण—"सदा तद्भावभा-

---

1 आप्रायणात पा (क, ग, ) 2 विद्याङ्गता पा (ग)

वितः" इति। "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनम्—"क्रियावानेष ब्रह्मविदां वरिष्ठः," "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति च। "सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति। निर्वचनम्—"सत्येन लभ्यः" "तेषामेवैष विरजो ब्रह्मलोकः" इत्यादि। देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' इति। "तद्विपर्ययोऽनवसादः"। निर्वचनम्—"नायमात्मा बलहीनेन लभ्यः' इति। "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति। तद्विपर्ययोऽनुद्धर्षः, अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि "शान्तो दान्तः" इति। एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति।

अथ [१] "विरोधादप्रमाणत्वात्" इत्यादिपूर्वपक्षहेतून् सूत्रकाराभिप्रायविदा
वाक्यकारोक्तविवेकादिसाधनसप्तकम् वचसापि परिहरति—वाक्य इति। एवकारेण [२] शमादेः यज्ञादेश्च [३] विरोधाभावः स्वोक्तसंवादश्च ख्याप्यते। अथ वा न साधनचतुष्टयेन, न च विवेकादिष्वन्यतमेन कर्ममात्रेण शमादिमात्रेण चेत्यर्थः।

निषिद्धकाम्यव्यर्थेभ्यो निवृत्तस्य शमादिभिः ।
स्वाश्रमोचितविद्याङ्गप्रवृत्तिर्न विरुध्यते ॥ ३१९ ॥

अविरोधेन सम्भूय साधनत्वव्यक्त्यै वाक्यमुपादत्ते—तल्लब्धिः इति। अत्र तच्छब्दार्थो 'ध्रुवानुस्मृतेः' इत्यनेन दर्शितः। "उपासनं स्याद्ध्रुवानु-

१ विरोधाप्रमाणत्वादि पा (क, ख, घ) २ शमदमादे पा (ङ)
३ विरोधाभावात् पा (ङ)

स्मृतिः" इति तत्र प्रकृत [१] हि परामृश्यते । विवेकादीनां सप्तानामेकस्मिन् कार्येऽन्योन्यसापेक्षत्वरूपेणेतरेतरयोगेन समप्रवृत्तिनिवृत्तिरूपाणामाश्रयभेदेन व्यवस्था शक्येत्यपि कतिपयशङ्का च व्युदस्ता । [illegible]—एकत्र योग्यतया विरोधप्रसङ्गाभावात् । **निर्वचनात्**—[२] अतीन्द्रियेऽर्थे [३] निश्चायकमानतया निष्कृष्टाद्वचनात्, [४] युक्तिसहितादागमादिति यावत् । इह विद्यायाः कर्मजन्यत्वसिद्ध्यर्थतयोपात्ताः के विवेकादयः कथं च तेषामविरोध इत्यत्र वाक्यकारेणैव व्याख्यातत्वमाह—**विवेकादीनाम्** इति । स्वरूपं च—उद्दिष्टानां मिथो व्यावर्तकं [५] रूपं चेत्यर्थः । **जातिदुष्टम्**—लशुनादि । **आश्रयदुष्टम्**—शूद्रान्नादि । **निमित्तदुष्टम्**—केशाद्युपहतम् । तादृशदोषराहित्येनाशुद्धेभ्यो [६] विभक्तादन्नात् सेन्द्रियस्य देहस्य रजस्तमोऽभिभवरहितसत्त्वोन्मेषापादनेन शुद्धितः पृथक्करणं विवेक इति । प्रदर्शकं वाक्यमाह—**जाति** इति । अत्र **निर्वचनम्** इति भाष्योक्तिः । **आहारशुद्धौ सत्त्वशुद्धिः** इति निर्वचने सत्त्वमन्तःकरणं सत्त्वगुणो वा । तस्य शोधनीयसर्वोपलक्षणतया वाक्ये कायोक्तिः, सापि करणवर्गोपलक्षिका । "आयुस्सत्त्व" इत्यादिभिः शुद्धाशुद्धाहारश्च गीतः । विमोकशब्दस्यात्र "कामः क्रोधस्तथा लोभः" इत्याद्युक्तत्याज्यवर्गानुपश्लेषपरतया कामानभिष्वङ्ग इति मूलघातोक्तिरित्यभिप्रायः । कामोऽत्र [७] तीव्रतनसङ्गजन्यः, "सङ्गात् सञ्जायते कामः" इत्युक्तेः । तेनाभिष्वङ्गाऽनुवृत्तत्वग्रहणम्, तदभावे "कामात् [८] क्रोधोऽभिजायते" इत्याद्युक्तपरम्परानिवृत्तिः । "शान्त उपासीत"

---

१ बहि पा (सु, घ)
२ अतीन्द्रियार्थे पा (सु)
३ निश्चायकतया पा (सु)
४ युक्तिसहितागमात् पा (सु)
५ स्वरूप च पा (सु)
६ विविक्तात् पा (क, घ)
७ तीव्रतमस्सङ्ग पा (क, ख, घ)
८ क्रोध इत्याद्युक्त पा (क, ख, घ)

इत्यत्र शान्तशब्दः करणव्यापारनिवृत्तिमुखेन कामादिराहित्यपरः । आरम्भणम्—योगमारुरुक्षोः चित्तालम्बन शुभाश्रयरूपम् । विवरणे तु—" ज्ञानालम्बनमुपास्यम् " इत्युक्तम् । तस्य सशीलनम् अनुकूलतया शीलनम् । पुनः पुनः इत्येतदङ्गप्रकरणात् " व्यापृतेनापि मनसा " इत्यादिस्मृत्या चोत्थानकाले योज्यम् । अत एव नात्माश्रयशङ्का । इद च योगानुगुणवासनाप्रचयार्थं कषायापाकरणार्थं च । " बाल्य च पाण्डित्य च निर्विद्याथ मुनिः " इति श्रौतनिर्वचनस्यास्पष्टार्थतया तदुपबृहण दर्शितमित्यभिप्रायेण स्मार्तोक्तिः । अत्र भाष्यकारो ब्रह्मनन्दी । वाक्यव्याख्याता द्रमिडाचार्यः । तेनान्येषु श्रुतिरुदाहृता, अत्र तु स्मृतिः । अथ वान्यत्र वाक्यकारेणैव श्रुतिरुदाहृता, अत्र तु भाष्यकारेणैव स्मृतिः इति । यद्यपि " य य [१]वापि स्मरन् " इति प्रक्रमात् ' सदा ' इत्यादिक सामान्यम्, तथापि " तस्मात्सर्वेषु कालेषु मामनुस्मर " इत्युत्तरवाक्यानुसारेण प्रकृतार्थत्वात्तद्ग्रहः । पञ्चमहायज्ञोपादान " गृहस्थोऽपि विमुच्यते " इति स्मृतिसूचनार्थम् । आदिशब्देनाश्रमान्तरधर्माणामपि सग्रहः । यद्यपि काम्ये सकलाङ्गोपसहारः प्राप्तः, तथापि अत्र वचनाद्यथाशक्त्यनुष्ठान पर्याप्तमित्यभिप्रायेण शक्तितः इत्युक्तम् । " तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमा गतिम् " इति[२]हि स्मर्यते । " क्रियावानेष ब्रह्मविदा वरिष्ठ. " इत्यत्र सन्प्रयोगाभावेन कर्मणा विद्यान्वयस्फौट्यात् " विविदिषन्ति " इत्येतदपि नियमितम् । इद च वाक्य क्रियाया अङ्गत्वेन विद्यापौष्कल्यहेतुत्वपरम्, न तु निष्क्रिय [३]ब्रह्मवित्सद्भावसूचकम्, यावज्जीव क्रियानुवृत्तेरुक्तत्वात् । मत्वर्थीयस्य भूमपरतया विधुरादिब्रह्मविद्यावृत्तिपर वा । तेषा हि वर्णधर्ममात्रयोगित्वादवरत्वम् " अत-

---

१ य य वापि इति पा (क, ख, घ) २ ' हि ' इति (क) कोशे न दृश्यते
३ ब्रह्मसद्भाव पा (ख)

स्त्वितरज्ज्यायो लिङ्गाच्च" इति सूत्रसिद्धम्। अत्र "मन्त्रेषु कर्माणि" इत्यारभ्य "तान्याचरत नियत सत्यकामाः" इति श्रुतिरप्यनुसन्धेया। क्रियाशब्दस्य [1] चित्तसमाधानादिमात्रव्यावृत्त्यै 'तमेतम्' इत्याद्युपात्तम्। **अनाशकेन**—अनशनेन। अत्र [2] गोबलीवर्दनयात्तपश्शब्दसङ्कोचः। यद्वा नाशकादन्येन इति, यज्ञाद्यपि भोगार्थं चेत् ससारात्मकनाशप्रदमेव श्रुत्यादिसिद्धम्। भूतहित यथार्थं च वाक्य सत्यम्। आर्जवम्—करणत्रयस्यैकरूप्यम्। दया—स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा। दानम्—न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम्। तेन लोभनिवृत्तिर्व्यज्यते। 'दैप् शोधने' इति धातौ स्वपक्षादिशोधन वा। 'दो अवखण्डने' इत्यत्र पराहङ्कारखण्डन वा, "निगृह्णीयाद्यथाशक्ति देवतागुरुनिन्दकान्" इति स्मृतेः। "न विगृह्य कथा कुर्यात्" इत्यस्य कामकारविषयत्वात्। अशास्त्रायप्राणिपीडावर्जनमत्राहिसा, "अहिसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति स्थापनात्। अभिध्या—परप्रतिकूलचिन्ता, अभिचारादौ [3] ह्यभिः प्रातिकूल्यार्थः, परकृतद्रोहे निरन्तरस्मृतिर्वा वितथाभिनिवेशो वा परस्वे ग्राह्यत्वधीर्वा, तन्निवृत्तिरनभिध्या। एव कतिपयोपादानम् आर्जवदयादिसहपठितानामन्येषामप्युपलक्षणम्। **इत्यादि** इत्यनेन "अमानित्वमदम्भित्व" "दया [4] सर्वेषु भूतेषु, क्षान्तिरनसूया" इत्यादेः सग्रहः। अनवसादः अर्थात् सिध्येदिति कृत्वा सहेतुक तत्प्रतियोगिस्वरूपविषय वाक्यमुपादत्ते—**देश** इति। शोकनिमित्त वस्तु **शोकवस्तु**, [5] शोचत्यनेनेति करणव्युत्पत्त्या वा शोकशब्दः।

---

१ चित्तसमाधानादिव्यावृत्त्यै पा (सु) २ गोबलीवर्दन्यायात् पा (सु)
३ ह्यभे प्रातिकूल्यमर्थं पा (सु) ४ सर्वभूतेषु पा (क, ख, घ)
५ शोच्यतेऽनेन पा (सु, ख)

आदिशब्दो [1] भीतिहेतुपरः, भूतभाव्यनिष्टगोचरधीरूपे दु खे शोकभये। **वैगुण्यात् अनुस्मृतेश्च** इत्यनयोर्मनसोऽभास्वरत्वम् इत्यनेनान्वयः। **अभास्वरत्वम्**— भास्वरत्वाभाव. तद्विरोधि वा। *तज्जनित तदभास्वरत्वम्। तत्स्वरूपाभिव्यक्त्यै तद्विवरणवाक्यस्याकाङ्क्षाया मध्ये "तज्ज दैन्यम्" इति वाक्यान्तरम्। तस्या जात तस्मिन्मनसि वा जातमभास्वरत्व दैन्यम्, उपयुक्त [2]प्रकाशनाशक्तत्वमित्यर्थः। यद्वा मनसो यदभास्वरत्व, यच्च तज्ज दैन्य तदुभयमवसाद इति योज्यम्। **तज्जम्**— [3] तादृशदयाविशेषाज्जातमित्यर्थः। अस्ति हि पुसा परदुःखदुःखित्वादि भास्वरत्वविरोधि मनसो दैन्यम्, तज्ज च शोकादिकमिति वा नेयम्। भास्वरत्वमिह प्रकाशकत्वम्, तदभावः। "तज्ज च दैन्यमवसादः" इत्यत्र "तद्विपर्ययोऽनवसादः" इति वाक्यशेषो भाष्योक्तः, वाक्ये तु शिष्याणामूहशक्तिसम्पत्त्यै तदनुक्तिः। **बलहीनेन**—"समदुःखसुख धीरम्" इत्युक्तमनोबल[4]रहितेनेत्यर्थः। **तद्विपर्ययजा**—देशादिगुणैर्भूतभाविसुखहेतुधिया बन्धुसुखेन च जातेत्यर्थः। उद्धर्षोक्तावपि पूर्ववत्तद्विपर्ययोऽनुद्धर्ष इति ऊह्यत्वाद्वाक्यानुक्त भाष्ये दर्शितम्। "यदृच्छालाभसन्तुष्टः," सतत योगी "स्वाध्यायशौचसन्तोष" इत्यादिविरोधमाशङ्क्याह—**अतिसन्तोष** इति। असन्तोषवदतिसन्तोषोऽपि विषयान्तरेष्वपि प्रवर्तकतया विरोधीत्यर्थः। इद चोद्धर्ष इत्युपसर्गेण सूचितम्। "ऐश्वर्यमदमत्तो हि" इत्यादिषु तत्तद्वृत्तान्तेषु चास्य विरोधित्व प्रसिद्धम। **निर्वचनमपि** इत्यत्रापिशब्दस्सम्भवसमुच्चयार्थः पूर्वनिर्वचनेष्वपि भाव्यः।

---

१ भीहेतु पा (क)
* इय पङ्क्ति (सु) कोशे न दृश्यते
२ प्रकाशनाशकत्वम् पा (सु, ख)
३ तादृशदशाविशेषात् पा (सु)
४ हीनेन पा (सु)

प्रकृत कर्मणामुपयोग निवृत्त्यशेन तेषामविरोधेन निवेशन च सूत्रवाक्याभिप्रेतन्यायसमाहारसिद्ध निगमयति—**एवम्** इति । एवकारेण परानिष्टत्व द्योत्यते । तत्त्वमस्यादिवाक्यानि वा व्यवच्छिद्यन्ते । तदिह कर्मण, [1]अनुपयोग विरोधप्रमाणाभावा निरस्ताः ।

**तथा च श्रुत्यन्तरम्—"विद्या चाविद्या च यस्तद्वेदोभय सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति । अत्राविद्याशब्दाभिहित वर्णाश्रमविहित कर्म । अविद्यया कर्मणा मृत्यु ज्ञानोत्पत्तिविरोधि प्राचीन कर्म तीर्त्वा अपोह्य विद्यया ज्ञानेन अमृत ब्रह्म अश्नुते प्राप्नोति इत्यर्थः ।**

अथ मृषावादिना समुच्चयवादिभ्या चान्यथा व्याख्याता श्रुतिरस्मदुक्तप्रकारमेव व्यनक्तीत्याह—**तथा** इति । **चो**ऽवधारणे । श्रुत्यन्तर च तथेति वान्वयः । अन्तरशब्द· सन्प्रत्ययरहितत्वेन [2] स्फुटार्थत्वात् अङ्गानामङ्गिनिष्पादने द्वारप्रदर्शनात् कर्मणा विध्यन्ताना कण्ठोक्तवेदनकरणकफलभावनानिष्ठतया परमपुरुषार्थविश्रान्तिबोधनाच्च प्रागुक्तवाक्याद्विशेष व्यनक्ति । **विद्या च** इत्यादेः परविद्या तदङ्गभूता कर्मरूपाविद्या चानुष्ठेयत्वेन शास्त्रतो यो वेत्तीत्यर्थः । [3] चकारावत्रोक्तसमुच्चयार्थौ । तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेषयोरेव विद्याफलयोर्निवर्त्ययोश्च प्राप्त्युपायविरोधिनोर्ग्रहणम् । **उभय सह** इत्यत्राङ्गाङ्गितया तृतीयाध्याये साधयिष्यमाणयोरनुष्ठेययोर्बुद्ध्यारोहणे साहित्यमभिप्रेतम् , न तु समकालतयोपादे-

विद्या च इति ईशावास्यश्रुत्यर्थे

१ अनुपयोगप्रमाणा पा (मु) २ स्फुटार्थत्वादङ्गि पा (मु)
३ चकारावभेदसमु पा (मु)

नमे । ऐक्यत्वे हि सहभाव उच्यते, न तु सहिततया वेदनम् । न ह्युत्पत्तिदशाया निगमनिगमदशाया च विद्याकर्मणो. सहत्वसम्भव । अत्र "अन्ध तमः प्रविशन्ति इत्यादिना "ततो भूय इव ते तमः" इत्यादिना च प्रत्येकनिन्दापरत्वम् । चकार सहशब्दश्च समसमुच्चयस्थापकाविति न भ्रमितव्यम्, तेषामन्यथासिद्धत्वात् । 'य उ विद्यायाऽरताः" इति कर्मानादरेण विद्योत्पत्त्यर्थोत्साहवन्त इत्यर्थ । कर्मनिरताना विद्यानिरपेक्षकर्मस्वरूप तावन्निष्पद्यत एव, न तु तावन्मात्रेण मुक्ति विद्यानिरताना हेत्वभावाद्विद्यैव न सम्भवति, कुतस्तरा मुक्तिरिति भूयःशब्दाभिप्राय । अविद्याशब्दस्यात्र कर्मविषयत्व प्रकरणेन स्थापयति—अत्र इति न तु सर्वत्र, "अविद्यायामन्तरे वर्तमाना" "क्षर त्वविद्या" "अनात्मन्यात्मबुद्धिर्या" इत्यादिषु [२] अर्थान्तरे प्रयोगात् । इह तु "आत्मन्येवानुपश्यति" "कुर्वन्नेवेह कर्माणि" इत्यादिना विद्या तदङ्ग कर्म च प्रकृतम्, तदेवात्राविद्याशब्देन विद्योपयोगज्ञापनार्थमनूदितम् । [३] परव्याख्याया व्याख्यातौ सशयविपर्ययौ छेत्तु पदार्थवाक्यार्थौ स्पष्टयति—अविद्यया इति । पापस्यानर्थहेतुतया अवयवशक्त्या गौण्या वा मृत्युशब्दबोध्यत्वाय, यज्ञादेर्विविदिषोत्पत्तिविरोधिनिवर्तकत्वव्युदासाय चोदितज्ञाननिवर्त्यतया श्रुतिस्मृतिशतसिद्धप्राप्तिविरोधिव्यावृत्त्यै च ज्ञानोत्पत्तिविरोधित्वोक्ति । यादवप्रकाशीयनिर्वाहोऽप्येतेन निरस्तः । यद्यत्र मृत्युतरण मुक्तिरेव, कथ विद्ययान्यत्साध्य स्यात् । क्त्वाश्रुतिश्च न घटते, स्वापेक्षया स्वस्य पूर्वत्वायोगात् ।

---

१ विरोधिनिरसन पा (सु) २ अर्थान्तरेष्वपि पा (सु)
३ परव्याख्यया पा (सु)

धीसङ्कोचनिवृत्तिश्चेदविद्याख्येन कर्मणा ।
धीविकासोऽपि सैवेति न साध्यान्तरसम्भवः ॥ ३२० ॥

प्रतिबन्ध[1] निरासश्च[2] साध्यते चेदविद्यया ।
अमृताप्तिः स्वतस्सिध्येन्नादृष्टान्तरकाङ्क्षिणी ॥ ३२१ ॥

स्वतः स्वानुभवाधानप्रवणः प्राणिना प्रभुः ।
प्रशान्तप्रतिबन्धाना निरपेक्षं हि कारणम् ॥ ३२२ ॥

मृत्युशब्दस्य साधारण्यसम्भवेऽपि " तमेव विदित्वाति मृत्युमेति " इत्यादिस्पष्टार्थबहुश्रुतिस्मृतिबलेन विद्यानिवर्त्यप्राप्तिविरोधिविषयत्वासम्भवात्, तत्र च " नान्यः पन्थाः " इति साधनान्तरप्रतिषेधेन कर्मणो विमुक्ति[3] साधनत्वेन समुच्चेतव्यत्वायोगात्, कर्मणः श्रुत्यादिभिरेव विद्यासाधनत्वस्थापनात् इहोपायविरोधिनि कर्मण्येव वृत्तिः । विद्याया इव कर्मणः उत्तराघविरोधित्वाभावात् प्राचीनग्रहणम् । ' तीर्त्वा ' इत्यस्य स्वरसार्थं त्यक्त्वा ' प्राप्य स्थितः ' इति परोक्त क्लिष्टत्वादध्याहारत्वाच्चायुक्तम् । यज्ञादिसत्कर्मणा विविदिषाविरोधितया मृत्युशब्दवाच्यं कर्म तीर्त्वेति[4] गमनिकापि[5] विविदिषार्थविनियोगप्रतिषेधात्प्रत्युक्ता । " एत सेतुम् " इत्यादिषु गत्यभावात्तरते. प्राप्तिवचनत्वमित्यभिप्रायेण **अपोह्य** इत्युक्तम् । विद्याशब्दस्य शास्त्रादिष्वपि प्रयोगात् इह प्रकृतब्रह्मवेदनविषयत्वं व्यनक्ति—**ज्ञानेन** इति । " एतदमृतम् " " एतदभयम् " " एतद्ब्रह्म "

---

१ करूपश्च पा (क, ख, घ)  २ बाध्यते पा (क, ख, घ)
३ साधनसमुच्चेत पा (सु)  ४ गमनशङ्कापि पा (ख)
५ विविदिषाविनियोग पा (घ)

"ब्रह्मविदाप्नोति परम्" इत्यादिश्रुत्यनुसारेणाह—**अमृतं ब्रह्म इति**। ननु पूर्वम् 'अविद्यानिवृत्तिरेव मोक्षः सा च ब्रह्मविज्ञानादेव भवति' इति परोक्तमभ्युपगतम्, इह तु "ब्रह्मविदाप्नोति" इत्युक्त्या अस्या श्रुतौ माध्यान्तर स्वीकृतमिति भाति, नैवम्—अविद्यानिवृत्तिशब्देन ज्ञानसङ्कोचनिवृत्ते. विवक्षितत्वेन भावान्तराभावनयेन [1] सैव ब्रह्मप्राप्तिरिति समानार्थत्वात्। मोक्षशब्दस्वारस्यानुरोधात् "अविद्या कर्मसज्ञा" इत्युक्त [2] बन्धककर्मनिवृत्तिविवक्षाया तु तावन्मात्रमेवोपासनसाध्यम्। धीसङ्कोचहेतुनिवृत्तौ सेतुभङ्गस्रोतःप्रवृत्तिनीत्या तादृशेश्वरसङ्कल्पेन स्वतः प्राप्तो धीविकास॰। अतः "विद्ययामृतमश्नुते" इत्यनेन प्रतिबन्धनिवृत्तौ विद्यातः सिद्धाया स्वतस्सेत्स्यन्ती ब्रह्मानुभूतिरुच्यत इति न पूर्वापरविरोधः। ब्रह्मप्राप्तेश्च परमपुरुषार्थतया काम्यमानत्वेऽपि तत्प्रतिबन्धकनिवृत्त्युपायस्य काम्यवर्गात्पृथगेव व्यपदेशः।

प्राप्तितत्साधनाना हि प्रतिबन्धनिवर्तकाः।
निवृत्तिधर्माः सर्वेऽपि नैमित्तिकपदे स्थिताः॥ ३५३॥

अत्र करणविभक्त्यन्तरूपकर्मज्ञानशब्दाभ्या "कषायपक्तिः कर्माणि ज्ञान तु परमा गति" "कषाये कर्मभिः पक्के ततो ज्ञान प्रवर्तते" इति स्पष्टार्थोपबृहणार्थ. सूच्यते। तेन च मृत्युशब्दस्यात्रोपायविरोधिविषयत्व वेदानुवचनादीना "विविदिषन्ति" इत्यत्र प्रकृत्यर्थेनान्वयः समुच्चयवादनिरासश्च सिध्येत्। कषायस्य पापस्य तज्जन्यरागादेर्वा पक्तिः, पच्यतेऽनेनेति पाकनिमित्त, गम्यतेऽनेनेति

---

१ सैव प्राप्ति पा (घ)

२ बन्धकर्मतिवृत्ति पा (घ, सु) 'बन्ध' इति पद (क) कोशे न

गति । ततो ज्ञानम, न तु विविदिषा, नापि मुक्ति प्रवर्तते, उचितविषये प्रकृष्टवृत्तिमद्भवतीत्यर्थः ।

मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरत् विहित कर्मैव । यथोक्तम्—

" इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ " इति ।

आस्ता प्रकरणम । अस्मिन्नेव वाक्ये कर्मणा विद्याङ्गत्वे साधारणानामविद्यादिशब्दानामस्मदुक्तपदार्थनियमे च निर्बोध स्वारस्यमात्रा वस्तुमात्र...हेतुर्लेश इत्यभिप्रायेणाह–मृत्युतरण इति । प्रतीता इति हेतुगर्भम । विद्येतरत इत्यनेन अतत्याविद्याशब्दनिरुक्ति । अब्राह्मणादिशब्दनयात्तदन्यवृत्ता प्रकरणस्यासन्नविषयत्व युक्तमित्यभिप्रायेण विहित कर्म इत्युक्तम, न त्वविहित कर्म, नापि ब्रह्मज्ञानादिकमिति पदद्वयान्वितावधारणाभिप्राय । एतेन 'कुर्वन्नेवेह कर्माणि' इत्यत्र कर्मशब्द साधारणोऽपि उचितविषये नियमित, न हि काम्यादिक यावज्जीवमनुष्ठेयम । उक्तश्रुत्युपबृंहणेन स्वोक्ता पदार्थव्यवस्था स्थिरीकृतावित्याह–यथोक्तम इति । ज्ञानव्यपाश्रय:–आगमोत्थज्ञाने प्रतिष्ठित । ब्रह्मविद्यामधिष्ठाय–विवेकादिजन्या परविद्या भक्तिरूपापन्ना निष्पाद्यत्वेनाभिसंधायेत्यर्थ । 'आगमोत्थ विवेकाच्च' इति प्रस्तुत ज्ञानद्वयमेव ह्यत्र स्पष्टीकृतम । अत एव मृत्युशब्दस्यात्र विविदिषाविरोधित्व चायुक्तम, तस्या साध्यत्वेनानुपादानात । " ब्रह्मविद्यामधिष्ठाय इत्यनेनेव

पुण्यस्य पापस्य च पुण्यपापयो समा पतोऽपत्र च

ज्ञानम... पा (प.

विदिषानिष्पत्तेरर्थसिद्धत्वाच्च । "ततुं मृत्युम्" इति प्रयोजनवचनेन नीर्त्वा" इत्यस्य प्राप्त्यर्थत्व[1]शङ्का च निरस्ता । उपबृहणीयश्रौतपदसूचका- ाद्याशब्दोक्तमेव च यज्ञशब्देन व्यञ्जितम् । यज्ञान् इयाज—चकारेत्यर्थः ।

ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानि- ष्फलतयोभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानो- पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानो- त्यविरोधित्वम् "एष एवासाधु कर्म कारयति त यमधो निनीषति" इति श्रुत्यावगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्व, सत्त्वस्य च यथार्थज्ञान- हेतुत्व भगवतैव प्रतिपादितम्—"सत्त्वात्सजायते ज्ञानम्" इत्यादिना । अतश्च ज्ञानोत्पत्तये पाप कर्म निरसनीयम् । तन्निरसन चानभिसंहितफ- लेनानुष्ठितेन धर्मेण । तथा च श्रुतिः—"धर्मेण पापमपनुदति" इति ।

ननु धर्मेण पापस्यैवापनोद्यत्व श्रुतम्, अत्र तु प्राचीन कर्मेत्यविशेषेण पुण्यस्यापि तरण कथ भाषितमित्यत्र वक्ष्यमाणश्रुतावपनोद्यतयोक्त शोधयति— ज्ञान इति । पुण्यस्य कथ धर्मापनोद्यत्व, पापशब्दवाच्यत्व चेत्यत्राह— ब्रह्म इति । उभयोः इति विगीताविगीतसवलितत्वोक्तिर्निदर्शन- परा । अत्र अभिधेयत्वम्—बोध्यत्वम् । "लक्षयेत्" इति विवरणोक्ति- वैभवात् । अयं भावः—"स एव धर्मस्सोऽधर्मस्त त प्रति नर भवेत्" इत्यादि स्मर्यते । अतः पुण्याभिसन्धिप्रसिद्धमपि मुमुक्षुदशाया पापायते ।

---

[1] शङ्का निरस्ता पा (क, ख, घ)

वश्या गुणा॰ " इत्यादिभि॰ गुणाना तद्द्वारत्वसिद्धिः, पापस्य दुःखसाधनत्व च नान्यव्यवच्छेदेनेति भाव॰ । द्वयोरपि ज्ञानविरोधित्वे मानाभावे कथ द्वारद्वारित्व [1] कल्पनमित्यत्र द्वारिणस्तावद्विरोधित्वे मानमाह—पापस्य इति । " एष एव " इत्यादिश्रुतौ न तावत् " अधो निनीषति " इत्येतन्निरयादिनिनीषार्थम्, अत्रोन्निनीषाया स्वर्गादिविषयत्वाभावात् । " यमेभ्यो लोकेभ्य उन्निनीषति " इत्यत्र स्वर्गादिसर्वलोकेभ्यो ह्युन्नयन स्वरसत॰ प्रतीयते, अतोऽपवर्गप्रापणप्रतिपक्षभूताधोनयनार्थमिहासाधुकर्म तत्साधनविरुद्धमेव स्यात्, तत्साधन चात्र " मामुपास्व " [2] इत्यादि विहितम् । तस्य चोपक्रमे " य त्व मनुष्याय हिततम मन्यसे " इति हिततमत्वमव्यवहितमोक्षोपायत्व सिद्धम् । तदेवात्र सन्निधिबलात् साधारणेनापि साधुकर्मशब्देन गृह्यते । तत्कारयितृत्व च " ददामि बुद्धियोग तम् " इत्यादिभिर्विशेषतोऽप्युक्तम् । तस्य चोत्पत्तिप्रतिबन्धकत्वेन विरुद्ध कर्म भगवद्वैमुख्यापादनं कर्म, [3] तत्सामुख्येऽधोगतिप्रसङ्गाभावात् । असाधुकर्मणश्चाधोगतिनिदानत्वम् " तानह द्विषतः क्रूरान् " इत्यारभ्य " ततो यान्त्यधमा गतिम् " इत्यन्तेन स्फुटीकृतम् । यद्वा साधुकर्मशब्द इह प्रस्तुतोपायाकाङ्क्षिताङ्गपर॰ । न चात्र कर्मण उन्नयनशब्दोदितमुक्त्युपायत्वम् [4] अद्वारकम्, श्रुत्यादिभिस्सद्वारकत्वस्थापनात् । अतो विद्याङ्गकर्मप्रतिकोटिस्थमसाधुकर्मात्र विद्योत्पत्तिविरुद्धमेव । किं च साध्वसाधुकर्मकारयितृत्वमिह न प्राचीनजीवकर्मनिरपेक्षम्, वैषम्यनैर्घृण्यप्रसङ्गात् । न च वायूदकादिवत् प्रेरकत्वम्, शास्त्रवैयर्थ्यादिप्रसङ्गात् बुद्धिप्रदानादिवचनविरोधाच्च । अत॰ " यमधो निनीषति " इति यद्वृत्तेन

---

१ क्लृप्ति पा (सु) २ इति विहितम् पा (सु)
३ तत्सामुख्ये पा (सु, ख, घ) ४ अद्वारकश्रुत्या पा (सु, क, घ)

कस्यचिदनुवादोऽधोनिनीषाहेतुभूतपापकारित्वं व्यनक्ति । पूर्वपापे चोत्तरपापारम्भे [1] ज्ञानलोपः तन्मूलविपरीतज्ञानं च द्वारम् । तथा चोपबृंहितम्— "यस्मै देवाः [2] प्रयच्छन्ति" "पापं प्रज्ञां नाशयति" इत्यादिभिः । सर्वदेवेषु सर्वपापेषु च सामान्योक्तमपि [3] प्रकृतेऽप्यकुण्ठितम् । विशेषतश्च गीयते—"क्षिपाम्यजस्रम्" इत्यादि । अतः पापस्य ज्ञानोदयविरोधित्वं सिद्धम् । ननु श्रुतेन द्विविधेन पापेनैव ज्ञानं निरुध्यताम्, निवृत्तिधर्मेण चोत्पद्यताम्, अलमुभयत्र प्रकृतिगुणैर्द्वारीकृतैरित्यत्राह—**रज** इति । [4] 'सत्त्वस्य' इत्युपादानमिह रजस्तमसोर्व्यतिरेकव्याप्त्या च ज्ञानहेतुत्वनिश्चयार्थं साधुकर्मद्वारप्रदर्शनार्थं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वेत्युक्तस्थापनार्थं च । श्रुतिस्मृतिप्रमितान्यतरत्यागस्य सति गत्यन्तरे विकल्पस्य चायोगात् द्वारद्वारित्वमेवात्र युक्तमिति भावः । [5] ननु "रजसो लोभः" इत्यनेनान्यथाधीहेतुत्वमपि सिद्धम्, अप्राप्तविषयलोभस्य भ्रान्तिहेतुत्वात्, "यया धर्ममधर्मं च" इत्यादिना तद्व्यक्तम् । "नाभुक्तं क्षीयते कर्म" इत्यादिस्मृत्या कर्मफलभोगावसाने ज्ञानं साध्यता, धर्मस्य च धृतिशब्दार्थसुखसाधनत्वमेव प्राप्तमिति शङ्कापनुत्त्यै निष्कृतिशास्त्रविनियोगपृथक्त्वाभ्यां सिद्धं निरास्यनिरासकस्वभावं निर्धारयन्नुक्तमर्थद्वयं निगमयति—**अत** इति । **निरसनीयम्**—अनन्तेषु पापेषु सन्तन्यमानेषु न कदाचिदपि [6] भोगेन निश्शेषशान्त्यवसरः, अतश्शास्त्रोक्तनिष्कृत्यैव तन्निरासः कार्य इति भावः । तथाप्यपरिमितानां निष्कृतिरप्यशक्येत्यत्राह—**तत्** इति । [7] "स्वल्पमप्यस्य धर्मस्य" इत्यादिन्या

---

१ च ज्ञानं पा (क, ख, घ)
२ प्रयान्ति पा (ख)
३ प्रकृतेऽकुण्ठितम् पा (ख)
४ सत्त्वोपादानम् पा (क, ख, घ)
५ "ननु" इति पाठः (ख) कोश एव
६ भोगे पा (ख)
७ स्वल्पमप्यस्य इत्यादि पा (ख)

येन फलान्तरसङ्गरहितनिवृत्तिधर्ममाहात्म्यात्तन्निवर्तन शक्यमित्याशयः । "य उ चैनमेव वेद" इत्यादिषु शास्त्रार्थवेदने फलश्रुतिः प्रशसार्था परम्परया वा स्यात् अधिकारिभेदेन वा । अत. अनुष्ठान प्रधानम् , तत्परित्यागिना तु कारणाभावात् कार्याभाव इत्यभिप्रायेणोक्तम्—**अनुष्ठितेन** इति । उपात्तश्रुतिगतानामविद्यादिशब्दाना स्वेष्टार्थत्व, पापस्य भोगेन विनापि निवर्त्यत्व च स्पष्टयन्ती श्रुतिमुदाहरति—[1] **तथा** इति । तत्र धर्मशब्दः प्रायश्चित्तमात्रविषयोऽप्यविशेषान्निवृत्तिधर्ममपि गृह्णाति । "विज्ञानादानन्दो ब्रह्मयोनिः" इत्यादिना ब्रह्मविद्यासन्निधानात् । सहपठितदानादिषु प्रतीतानि द्विपद्वशीकरणफलान्तराण्यपि ब्रह्मविद्यानिष्पत्त्यनुगुणान्येव । [2] अङ्गिफल चात्र "भूयो न मृत्युमुपयाहि विद्वान्" इति [3] प्रस्फुटम् । अतोऽत्र निवृत्तिधर्मेण सांसारिकपुण्यपापयो द्वयोरपि पापशब्दोक्तयोर्निवर्त्यत्व सिध्येदिति ।

**तदेव ब्रह्मप्राप्तिसाधनभूत ज्ञान सर्वाश्रमकर्मापेक्षम् । अतोऽपेक्षितकर्मस्वरूपज्ञान केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ।**

एतावता किमायातमित्यत्र तन्मूलमुपासनात्मक ज्ञानमित्यनेनाभिप्रेत कर्मसापेक्षत्व निरूढमित्याह—**तत्** इति । तत्—उक्तश्रुतिस्मृतिसूत्रोपपत्तिसम्प्रदायबलात् । **एवम्**—निष्कामकर्मणा ब्रह्मविद्याप्रतिबन्धनिरासकत्वप्रकारेण । अस्त्येव विचार्यस्योपासनस्य स्वाङ्गकर्मापेक्षा ।

कर्मविचारस्य पूर्ववृत्तता

---

१. यथा इति पा (सु) २ अङ्गफलम् पा (क)

३ प्रस्पष्टम् पा (सु, ख, ग)

तद्विचारस्य कृत्स्नकर्मविचारापेक्षा कथमित्यत्र स्थापितमर्थं निगमनेन स्थिरयति—अत इति। मुक्तिसाधनविद्याया निवृत्तिधर्मैर्नैरपेक्ष्यायोगात् इत्यर्थः। अपेक्षितकर्मस्वरूपज्ञानम् इत्यनेन वृद्धव्यवहारेण व्रीह्यादिवत्कर्ममीमासया यज्ञादिपदार्थाना सेतिकर्तव्यताकाना विशेषतो वेदितव्यतया विधिविनियोज्यस्वरूपापेक्षिणि विनियोगे नागृहीतविशेषणन्यायतः स्वाङ्गसाध्यस्य फलसाधनतया तत्स्वरूपान्वितस्यैव बुभुत्सितत्वम् [1] अचिन्तितेऽप्युपासने कर्मणश्चिन्तयितु शक्यत्व च सूच्यते। विधानङ्गकर्मनिन्दया विद्याप्ररोचन च तादृशकर्मज्ञानापेक्षमित्यभिप्रायेण केवल इत्यादिकमुक्तम्। अवसेयम्—साध्यमिति यावत्। मीमांसा अत्र विचारः। त्याज्योपादेयसहितोपासनशास्त्रार्थं विचारयतामवश्यम्भाविनस्तदुभयस्वरूपनिश्चयस्य कर्ममीमासा [2] साध्यतया अत्र [3] अपेक्षिता त्वदनिष्टा [4] वृत्तत्वेन वक्तु युक्तेत्यभिप्रायेण सैव इत्युक्तम्। अन्ततः कर्मपरीक्षासापेक्षा तापत्रयवृत्ततोक्तिश्चानेन निरस्ता। साधनचतुष्टयस्य वा [5] व्युदास एवकारेणोपक्षिप्यते।

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयं, विनियोगश्च श्रुतिलिङ्गादिभ्यः, स च तार्तीयः।**

---

१ चिन्तितेऽप्युपा पा (मु) २ साध्यताया पा (मु)
३ अपेक्षितत्वात् पा (मु) ४ वृतत्वेन पा (मु)
५ निरास पा (मु)

न केवलमस्मदुक्तस्य युक्तत्वमात्रम्, त्वदुक्तस्य दोषोऽप्यस्तीत्यभिप्रायेणाह—अपि च इति। तत्रान्योन्याश्रयमुद्घाटयति—नित्य इति। चस्त्वर्थो वर्तिष्यमाणस्य वृत्ततावैपरीत्यद्योतकः। मीमांसाशब्दोऽत्र भागद्वयार्थः, आत्मनित्यताद्युपादानात्। श्रवणशब्दश्च विचारपर्यन्तः।

साधनचतुष्टय-पूर्ववृत्ततानिरास

अय भावः—किमत्र विवेकशब्देन निश्चयो विवक्षित आपातधीर्वा? नाद्यः—कृत्स्नमीमांसासाध्यस्य ब्रह्मविचारापेक्षया पूर्ववृत्तत्वायोगात्, आत्मनित्यत्वादिक ब्रह्मकाण्डे हि निरूपयिष्यते। न द्वितीयः—तस्याः [1] कर्मब्रह्मकाण्डसाधारणत्वेन विशेषतोऽत्र वक्तुमयुक्तत्वात्। प्रथमातिक्रमे कारणाभावस्य चोक्तत्वात्। न च सा फलान्तरवैराग्यादेर्हेतुः, उभयत्रामृतत्वाद्यापातधीसिद्धेः। न च कपिलकणादादितन्त्रैर्विवेकः, अध्ययनादिक्रमेण तदवसरनिरोधोक्तेः, तेषु च बहुधा निश्श्रेयसतत्साधनादौ विवेकवैपरीत्यस्य [2] त्वयापि समतत्वात्। अत एव हि निरसिष्यन्ते। "नित्य हि नास्ति जगति" इत्याद्युपबृंहण तु श्रुतिमनुरुध्यैव विवेकार्थं स्यात्। न तु स्वातन्त्र्येण, अन्यथा कि शारीरकेण, ततोऽन्यत्र सशयादिसम्भवादिति चेत्, तर्हि तत्र न विवेकसिद्धिः। यत्त्वत्र वाचस्पतिनोक्तम्—"नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्माः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणा च विवेको नित्यानित्यवस्तुविवेकः" इत्यारभ्य, "नित्यत्व सत्यत्व तद्यस्यास्ति तन्नित्य सत्य, तथा चास्थागोचरः, अनित्यत्वमसत्यत्व, तद्यस्यास्ति तदनित्यमनृतम्, तथा चानास्थागोचरः" इति, "यद्दत तन्नित्य सुख व्यवस्थाप्यते तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृत भविष्यति, तापत्रयपरीतं तत्त्यक्ष्य

---

१ कर्मकाण्ड पा (मु)    २ तवापि पा (मु)

इति सोऽयं नित्यानित्यवस्तुविवेकः" इति च, एतदपि मन्दम्—[1] अनित्यस्याप्यबाधितत्वेन सत्यत्वस्य स्थापयिष्यमाणत्वात्। न च नित्य सुखमनुपादेयमिति धिया कर्मिणा कर्मविचारादौ प्रवृत्तिः; किं तु तस्य कर्मसाध्यत्वभ्रमाद्वा दौर्लभ्यबुद्ध्या वा। किं च नित्यत्वादिमात्रं [2] नास्थागोचरत्वादिनिदानम्, पुरुषार्थतत्साधनत्वाभ्यामेव [3] सास्था, तद्वैपरीत्याच्चानास्था। ते च [4] नित्यानित्ये च यथार्हे स्याताम्। निरूपकस्यापि ह्यनित्यसुखत्यागः "अशक्यानि दुरन्तानि समव्ययफलानि च" इति न्यायात्, अधिकसुखलाभतृप्त्या वा स्यात्। तदभावे अत्यल्पमपि सुखमुपादीयते। नित्यमपि यदि दुःखात्मकमनुभयरूपं वा, कथमास्थार्हम्? प्रकृतस्य प्रकृष्टसुखत्वेन प्रतीतत्वादिति चेत्, तत्प्रतीतिस्तावन्न व्याप्त्या, अदृष्टेः। न च श्रुत्या, तन्मूलापातधियस्साधारण्यादिदौस्थ्यात्, निश्चयस्य तु मिथस्संश्रयग्रस्तत्वात्, तन्त्रान्तरस्मृत्योश्चासाधकत्वस्य दर्शितत्वात्। नित्यसुखसम्भवमूलोपादित्सा च साधारणी। तन्त्रान्तरे तदसम्भवश्च [5] सुव्यक्तः। "आनन्दो ब्रह्म" इत्यादिरमीमासित [6] कर्मब्रह्मभागैर्दुर्बोधः, प्रमाणाध्याये तर्कपादे च तन्निरासात्। तत एवात्राद्यसूत्रेऽन्यत्र च नित्यफलासम्भवः प्रकृतोपयोगात् प्रतिष्ठाप्यत इत्यपि दुर्वचम्, युष्माभिरेव सूत्रवाक्यार्थानुक्तेश्च। अपि च नित्यसुखस्यात्र सम्भावनामात्रम्। स्वर्गादिसुखस्यानित्यत्वं च न शास्त्रान्तरेणानुमानेन वा सिध्येत्, ताभ्यामेव वैपरीत्यस्यापि सुवचत्वात्, स्वर्गसुखमनित्यं सुखत्वादित्यादेरमृतत्वादिश्रुतिबाधात्। तदान्यपर्यस्य तन्निरूपणसापेक्षत्वात्, अन्यथा मुक्तसुखमनित्यं सुखत्वा-

---

१ अनित्यत्वस्य पा (सु)
२ नास्थादि पा (सु)
३ ह्यास्था पा (सु)
४ नित्यानित्ये यथार्हे पा (सु)
५ सुव्यक्तम् पा (ख)
६ कर्मबागै पा (सु)

दित्यादेरपि प्रसक्तेः। तदप्रसक्तिश्च [1] त्र्यन्तार्थनिर्णयात् स च तथेति मिथस्संश्रय। अतः कर्मविचार एवात्रापेक्ष्यः। शमदमादीना साधनत्वविवेकः तत्स्वरूपमात्र वा वृत्तमित्युच्यते। न पूर्वः—तस्य [2] "शमदमाद्युपेतः स्यात्" इति साधनलक्षणे निष्पाद्यत्वात्। नोत्तरः—[3] तत्र श्रवणौपयिकावधानादिमात्ररूपाणा सर्वशास्त्रसाधारण्येन विशेषतोऽत्र वक्तुमयुक्तत्वात्। योगौपयिकाना तु बाह्यान्तःकरणनिरोधादिरूपाणा त्र्यन्तार्थश्रवणात्पूर्वमयुक्तेः "तस्मादेवविच्छान्तो दान्तः" इति ब्रह्मधीपूर्वकत्वोक्तेश्च। किं च नित्यानित्यविवेकादयः किं हेतुसाध्यरूपेण स्थिताः, अन्यथा वा। आद्ये कर्मविचारोऽपि "परीक्ष्य लोकान्" इत्यादिप्रकारेण मुमुक्षायाः परम्परया हेतुहेतुमद्भावात्सह पाठ्यः, अन्यथा मुमुक्षुत्वमेकमेव हि पाठ्यम्, किं चतुष्कग्रहणेन। द्वितीयेऽप्यभ्युगमविरोधात् "विवेकाद्वैराग्यम्" इत्यादिक्रमस्य पौर्व्याख्यातत्वादिति। अत्र **मीमांसाश्रवणमन्तरेण** इत्युक्त विवृणोति—फल इति। कर्मभागे स्वर्गादिर्यागादिः प्रयाजादिः बुभुक्षुश्च फलादयः, ब्रह्मभागे तु मुक्त्युपास्तिशमादिमुमुक्षवः। एषा विशेषः पूर्वपक्षोक्ताद्व्यावृत्त रूपं मिथो भेदश्च। नात्र फलकरणादिनिश्चयेन कर्मस्वरूपादिबोधोक्तौ साध्याविशेषः, पदार्थवाक्यार्थनीत्या तेषु तेष्वधिकरणेषु तत्तदवान्तरवाक्यार्थनिश्चयेन पश्चान्मिथस्संसृष्ट [4] विशिष्टमहावाक्यार्थबोधोक्तेः वैराग्यादिमूलभूतस्य नित्यानित्यविवेकस्य फलकरणादिनिश्चयान्तर्गतबोधनपरत्वाच्च। कर्मग्रहणमिहोपास्तेरप्युपलक्षक क्रियत इति वोभयसग्रह.। उपासनेऽपि कर्मशब्दस्सूत्रेऽप्युक्तः—"प्रकाशश्च कर्मण्यभ्यासात्" इति। तत्र च भाष्यम् "उपासनात्मके कर्मणि" इति। [5] अन्यत्र

---

१ त्र्यन्तार्थनिश्चयात् पा (सु) २ शमदमाद्युपेत इति पा (सु)
३. अत्र श्रवणौप पा (क) ४ ससृष्टमहावाक्यार्थ पा (क)
५ अन्यत्र यागा पा (सु)

च "यागादिकमुपासनात्मक च कर्म" इति। मानसकर्मोक्तिश्च
दृश्यते। कर्मशब्दस्यात्र ज्योतिष्टोमादिमात्रविषयत्व मत्वा तत्स्थ
नन्निरूपणप्रकारस्यानुकारः, न तु निश्चयप्रकारस्येति केचित्।
अकेन व्यतिरेकेण भाष्यमाणस्याय च भावः–कि केन कथमित
रात्रयनिश्चयमन्तरेण कथ त्र्यशभावनात्मककर्मबोधः, कथ च जीव
धेकारान्वितस्वर्गादिपदार्थस्य [1] देहान्तरदेशान्तरभोग्यत्वनिश्चयः।
ऽकायतसौगतगतिखण्डनगर्भपूर्वोत्तरदेहानुवृत्तात्माध्यवसायः। आत्मा
गोपलब्धेरन्यथासिद्ध्या वचनमन्तरेण कथ सुखत्वश्रुतिमुख्यत्वम्। तादृश
नावे देहमेवात्मान मन्यमानस्य कथमैहिकफलविरक्तिः। नित्यसुखरूपतय
यधिकर्तुः प्रवृत्तिधर्मफल कृत्स्न परिमितविषयभोगरूपमनित्य, निवृ
रं नित्यमिति निश्चयालाभे कथ स्वर्गाद्यनित्यफलजिहासा नैगमान्तिक
धेया समाकर्षश्च। अतस्साधनचतुष्कवृत्तवादे विवेकविशेषादेर्मूलतया भागद्व
ष्टव्यः। ततश्च कर्मविचारसापेक्षत्वम्। परमन्योन्याश्रयस्त्वधिक
गादिशब्देन ज्ञानानन्दरूपत्वसग्रहः। शमादिसाधनसम्पत्तौ विशे
ाह—एषाम् इति। "शान्तो दान्तः" इत्यादिविनियोजकव
ार्थः। विनियोगोऽङ्गाङ्गित्वबोधनम्। "सम्बन्धः" इति तु न्यायसुदर्शनम्।
मादेरङ्गत्वे बोधिते ह्यत्र साधनत्वमनुक्तमप्यर्थात्सिध्येत। ततः किमित्यत्र
षलक्षणसिद्धप्रमाणलक्षणसापेक्षत्वमाह—विनियोग इति। एतैर्मानैर्ब्रह्म-
ाण्ड एव तद्विनियोगश्चिन्त्यतामित्यत्राह—[2] स इति। स च तार्तीयः—
ागुक्तसङ्गतिक्रमेण कर्मकाण्डतृतीयाध्यायोक्तः। इह पुनस्तृतीये लाघवानु-

---

१ पदार्थस्य देशान्तरभोग्य पा (क, ख) २ स इति। तार्तीय पा (ख)

सारात्पूर्वं व्युत्पादितैस्तैरवाक्षेपसमाधानमात्र करिष्यते । एवमेवाध्यायान्तरन्यायोपजीवन चात्र द्रष्टव्यमिति भावः ।

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादनसाधनानीति [1] तत्साद्गुण्यापादकान्येतानि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥**

अथ युक्त्यन्तर दर्शयन्नुद्गीथाद्युपासनविचारस्य स्थानान्तरानर्हतयात्रैव मुख्यसङ्गत्या कर्मब्रह्मचिन्ताक्रम स्थापयति—**उद्गीथ** इति । **कर्मसमृद्ध्यर्थान्यपि** इत्यनेन पूर्वत्रोपयोग इह नेति शङ्कोद्धाट्यते । **कर्मसमृद्धिः**— "तदेव वीर्यवत्तरम्" इति श्रुत्युक्तेः प्रबलकर्मभिरप्रतिबन्धो गुणफलरूपः । **ब्रह्मदृष्टिरूपाणि** इति हेतुगर्भम् । **ब्रह्मज्ञानापेक्षाणि**—न ह्यारोप्यस्वरूपमन्यत्राजानतः क्वचिदपि तदारोपः, अनिर्वचनीयादिदृष्टेर्दूषयिष्यमाणत्वात् । इह च ब्रह्मज्ञान प्रथमद्विकसाध्य [2] मित्याशय । दृष्ट्युपासनाना प्रधानानुपयोग प्रणाड्योपयोगात् परिहरति—**तानि** इति । उद्गीथाद्युपासनपरिहार्यप्रत्यूहानीति यावत् । **अपि**रत्र परारोपितविरोधद्योतकः । यद्वा पूर्वग्रन्थेऽनुपयोगमन्वारुह्य सजातीयप्रयोगमात्रात्सङ्गतिरनन्यगतिकाकाङ्क्षोक्त्या परिहृता । [3] अत्र तूपयोगश्चास्तीति व्यज्यते । **अनभिसंहितफलानि**—बन्धकफलसङ्कल्परहितत्वादित्यर्थः । ब्रह्म-

उद्गीथाद्युपासनानां साङ्गत्यम्

---

१ तत्साद्गुण्यापादनानि पा (श्रुत शिका)   २ मित्यर्थ पा (सु)
३ अत्र चोप पा (सु)

तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।" "इन्द्रो मायाभिः पुरुरूप ईयते" "मम माया दुरत्यया" "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते।

तस्याः [1] स्वरूपं परब्रह्मदोषत्वं तत्फलं च श्रुत्यैव स्थापयति—**अनृतेन** इति। अविद्याया अनिर्वाच्यत्वं **प्रत्यूढाः**—प्रतीपं प्रापिताः; प्रतिरुद्धा इत्यर्थः। तरङ्गचन्द्रवत्कल्पि- ब्रह्मण. अविद्यातिरोहितत्वं च तजीवभेदविवक्षया बहुवचनम् `पाशवदविवक्षितार्थं वा; "एतं ब्रह्मलोकं न [2] विन्दन्ति" इत्यत्र प्रत्यूढत्वं हेतुः। इदं पूर्ववाक्योक्तेन विवृणोति—**तेषाम्** इति। "त इमे सत्याः कामा अनृतापिधानाः" इत्युक्तानां तत्तत्कामोपाधिप्रतियोगिभूतकल्पितार्थव्यावृत्तिरूपाणां ब्रह्मस्वभावानां तदभिन्नतया प्रामाणिकानां सतां मिथ्याभूतमज्ञानमाच्छादकमित्यर्थः। व्यावर्त्यभेदेन व्यावृत्तिभेदकल्पनयात्रबहुत्वोक्तिः। 'पूर्ववत्पाश [3] न्यायेन वा' इति केचित्। अविद्याया अनिर्वाच्यत्वं दर्शयति—[4] **नासदासीत्** इति। नात्र निषेधमात्रे पर्यवसानम्; उभयनिषेधेन **तम आसीत्** इति विहितमुभयविलक्षणमेव हि स्यादिति भावः। केचिदाहुः—"बन्धमूलमज्ञानं कर्मरूपम्; प्रवाहानादिभ्रान्तिज्ञानमूलं त्वज्ञानमिन्द्रियादिदोषाधिष्ठानयाथात्म्यज्ञानप्रागभावश्चेत्येतत्सर्वम् तत्कार्याणि च सदसद्विलक्षणानि। सर्वमूलाविद्या त्वर्धपञ्चमाकारा तन्निवृत्तिर्हि [5] पञ्चमप्रकारा"

---

१. स्वरूपं ब्रह्म पा (सु). २ विन्दति पा. (क, ख, घ).
टि—"अदिति. पाशान्" इतिवत्.
३. नयात् पा (ख, क, घ) ४ नासदिति. पा. (ख, क, घ).
५. पञ्चमाकारा पा. (सु).

इति। तमश्शब्देन ज्ञानविरोधित्वं तिरोधायकत्वं च व्यज्यते। **तमसा गूढम्**–अज्ञानेनावृतम्। अत्र **प्रकेतम्** इति विशेष्यं ब्रह्म। ननु सुबालश्रुतौ तमश्शब्देनानिमृश्मा मूलप्रकृतिरुच्यते, न त्वदिष्टाविद्येति अत्र प्रकृतेर्मायात्वेन मिथ्यात्वस्यापि मायाकल्पितत्वं श्रुतमित्याह–**मायां तु** इति। प्रकृतिं मायां विद्यादिति विपर्ययेणान्वयः। एकस्य सतो मायामरीचिकावीचिकाभिर्विविधत्वेन भानमाह–**इन्द्रो मायाभिः** इति। अत्र इन्द्रः सर्वदृगीश्वरः; "रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" इति पूर्ववाक्यस्वारस्यात्। "स एतमेव पुरुषं ब्रह्म *ततममपश्यदिदमदर्शमिति। तस्मादिदन्द्रो नाम" "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेण" इत्युपनिषदैव तद्विषयत्वेन निरुक्तेश्चेति भावः। "ज्ञानवान्मां प्रपद्यते। वासुदेवः सर्वमिति–" इत्युक्तैक्यज्ञानमन्तरेणास्या मायाया दुस्तरत्वं गीतमित्याह–**मम माया** इति। तदनादित्वं तया तिरोधानं कदाचित्तन्निवृत्तिश्च [1]समर्थ्यत इत्याह—**अनादि** इति। आदिशब्देन "अविद्यया मृत्युं तीर्त्वा" "भूयश्चान्ते विश्वमायानिवृत्तिः" "गुणमाया [2]समावृतः" यन्त्रारूढानि मायया" इत्यादिसंग्रहः। स्वरूपविधि [3]वाक्यसिद्धशुद्धाकारानुरोधेन दोषविधिपरेषु महेश्वरादिशब्दा बहुवचनञ्च मायोपश्लिष्टविषयतया न त्रिविधभेदसत्यत्वं स्थापयितुं क्षमन्न इत्यभिप्रायेणानुदाहृतानेकवाक्य [4]संकलितार्थस्य निर्विशेषत्वादेरनूक्तिः।

---

टि—उपनिषदनुसारेण अयं पाठ आहृतः, मातृकासु "तमपश्यदिदमदर्शमिति। तस्मादिन्द्रो नाम" इत्येवोपलभ्यते.

१. स्मर्यते. पा. (क, ख, घ).
२. सवृतः. पा. (ग).
३. वाक्यसिद्धाकार. पा. (ग).
४. सङ्कल्पितार्थस्य. पा. (क, ख, घ).

"तदैक्षत बहु स्याम्।" "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्–" इत्यादि प्रमाणं सर्वार्थानां च सच्चिदनुवेधेन भानं चानुसरन् शुक्तिरूप्यादिवद्भ्रमस्य विषयाश्रयभेदशङ्कां च व्युदस्यति—स्वगतनानात्वम् इति। स्वाध्यस्तं चिदचिद्भेदं वृत्तिसम्भेदेन [1] स्मृतित्वम् अनुभवत्वादिधर्मभेदं चेत्यर्थः।

यथोक्तम्—

"ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
[2] अतो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥

यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥"

"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित् कदाचिद् द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
एकं सदैकं परमं परेशः स वासुदेवो न यतोऽन्यदस्ति॥

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥" इति।

---

१. स्मृतित्वानुभवत्व. पा. (सु).        २ 'ततो हि' इति पाठभेद

दोषविषयतयोदाहृतश्रुतीनां महेश्वरादिशब्दैरन्यपरत्वशङ्कां [१] निवारयितुं श्रुति-तदर्थापत्तिसिद्धमर्थं निर्विशेषवस्तुदोषविषयोपबृंहणेन व्यनक्ति—**यथोक्तम्** इति। [२] **निर्विशेषेऽपि भगवानित्युपचारः। अशेषमूर्तिः**—सर्वत्वेन भ्रान्तिसिद्ध इत्याशयः। **न तु वस्तुभूतः** "पुमान्न देवो न नरो न पशुर्न च पादपः" "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इत्यादिवादान्न देवादिजडवस्तुरूपः। यद्वा—वक्ष्यमाणशैलादिकृत्स्नजगद्वस्तुरूपः । अत्र स्वरूपसाक्षिवृत्तिज्ञानानां प्रपञ्चरूपविकृतयोगात् **विज्ञानशब्दो** विविधं ज्ञायतेऽनेनेत्यविद्याविषयः । **विजृम्भितानि**—अध्यस्तानि [३] इत्यर्थः। भेदस्य दोषकल्पितत्वं व्यतिरेकेण द्रढयति—**यदा** इति। **शुद्धम्**—अविद्यामुक्तम्। **निजरूपि**—तन्मूलभेददृष्टिशून्यम्। तत एव **सर्वकर्मक्षयेऽपास्तदोषम्**—कर्मसाध्यक्लेशादिरहितम्। **संकल्प** इहाविद्या। "अविद्यातरु [४] सम्भूतिस्थानतो दर्शनात्" "विज्ञानविजृम्भितानि" इत्युक्तस्यैव चात्र परामर्शात् समन्ताद् ब्रह्मणैकीकृत्य वा कल्प्यन्तेऽनेन भेदा इति व्युत्पत्तिसम्भवाच्च। **वस्तुषु वस्तुभेदाः**—वस्तुत्वेन पृथग्भूतेषु देवादिपिण्डेषु [५] कल्पितेषु जीवेषु वा [६] तद्वद्भाता देवत्वादयो देवादिपिण्डाश्च न भवन्ति; देवादिप्रतिभासो न स्यादित्याशयः। उक्तप्रदर्शनमात्रार्थतया [७] "वस्त्वस्ति" इत्यादिश्लोकद्वयमत्र नोपात्तम्। श्लोकचतुष्टयोक्तं विजातीयभेदाभावं निगमयति—**तस्मात्** इति। ज्ञानमात्रात्मनि यथादर्शनं तत्तद्वादिभिरुक्तः सजातीयभेदोऽपि

---

१. निरसितुम्. पा. (सु).
२. निर्विशेषोऽपि. पा. (क, ख, घ).
३. 'इत्यर्थः' इति (सु) कोशे न.
४ सम्भूतीत्येतत्स्थाने. पा. (सु).
५. 'कल्पितेषु' इति (घ) कोशे न
६ तद्वद्भूताः. पा (क)
७, वस्तु इत्यादि. पा. (सु).

भ्रान्तिसिद्धतया [१] मिथ्याभूत इत्याह–**विज्ञानम्** इति । **विज्ञान**शब्दाविह स्वप्रकाशानन्दरूपविलक्षणज्ञानपरौ, तथापि निरसनीयत्वेनाभिमताः स्वगता भेदा दुस्त्यजा इत्यत्राह–**ज्ञानम्** इति । **विशुद्धम्**–अविद्योज्झितम् । अत एव **विमलम्**–भेददृष्टितन्मूलकर्मरहितम् । [२] **विशोकम्**–कर्माभावादेव तत्फलभूतशोकमोहादिशून्यम् । **एकम्** इति पूर्वोक्तात्मानुवादः । **सदैकम्**–सर्वदानाघ्रातविकारषट्कम् । ईदृशस्योत्पत्त्यादिकमपि अन्तःकरणवृत्तिसम्भेदादध्यस्तम् । मिथ्यात्वादेवात्र [३] वृद्धिह्रासादिकं निषिध्यते । स्फटिकरागकल्पस्याविद्यादेरवस्तुत्वेऽपि स्वाप्नसर्पादिनीत्या निराचिकीर्षादिकमपि न विरुद्धमिति भावः । **परमः परेशः** इत्यादिना सामानाधिकरण्येन जीवेश्वरभेदस्यापि कल्पितत्वोक्तिः । किमसौ दुरारोहः पूर्वपक्ष इत्यत्राह–**सद्भाव** इति । भेददृष्टेरविद्याजन्यत्वशङ्काया निःशेषोन्मूलनाय निगमयति—**एतत्** इति । **एतत्**–ज्ञानमात्रस्वरूपं ब्रह्म [४] स्वाप्नप्रपञ्चकल्पेन भुवनेनाधिष्ठानतयाश्रितम् । **संव्यवहारभूतम्**–समन्तात् एकीकृत्य वा व्यवहारकर्मभूतमिति [५] यावत्; तत्रापि कारणमविद्येति चोक्तमित्यर्थः । चकारः—"सद्भाव [६] उक्तः" इत्यनेन भ्रमहेतूक्तेः समुच्चयार्थः । एवं [७] वा योजना—"संव्यवहारभूतं" भुवनकोशादकं तत्रापि एतदेवाध्यासतो भुवनाश्रितं "ज्योतींषि [८] विष्णुः" इत्यादिना तथोक्तमिति । यद्वा–एतत्तु भुवनगतं संव्यवहारभूतं संव्यवहारेण प्राप्तं व्यावहारिकं सत्यत्वं यत्, तत्राप्यध्यास एव

---

१ मिथ्येत्याह पा. (क, ख, घ).
२ 'विशोकम्' इति (क, ख, घ). कोशेषु न.
३. 'वृद्धि' इति (घ) कोशे न
४. स्वप्नप्रपञ्च पा. (सु).
५. यत्तत्रापि पा. (सु).
६. 'उक्तः' इति (सु) कोशे न.
७. योजनीया. पा (घ).
८. 'विष्णुः' इति (सु) कोशे न.

[१] कारणमुक्तमिति । तथा च परेष्टानुवादे भाषिष्यते—"तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्" इति । चः त्वर्थः ।

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति "न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति"

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥

"ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वातिमृत्युमेति नान्यः पन्थाः" *इत्यादयः श्रुतयः । अत्र मृत्युशब्देन अविद्याभिधीयते ; यथा सनत्सुजातवचनम्—"प्रमादं वै मृत्युमहं ब्रवीमि सदाप्रमादममृतत्वं ब्रवीमि" इति ।

एतावता [२] प्रकृते किमायातमित्यत्र मुक्त्युपायस्य कर्मनैरपेक्ष्यं सिद्धपरवाक्यानुविधायिमोक्षोपायपरवाक्यशक्त्या व्यनक्ति—अस्या इति । अनिर्वाच्यत्वादिविशिष्टाया इत्यर्थः । तत एव ज्ञानमात्रनिवर्त्यत्वं ब्रह्मात्मैकत्वं महावाक्यार्थः ; ऐक्यदर्शनमविद्यानिवर्त्तकमित्याह—न पुनः इति । एकं पश्यति इति यत् ततो न पुनर्मृत्यव इति

अविद्याया ब्रह्मात्मैक्यज्ञाननिवर्त्यत्वं मृत्युशब्दवाच्यत्वं च

१. कारणभूतम्. पा. (सु).

* टि—श्रीभाष्यकोशेषु सर्वत्र 'इत्याद्याः' इत्येवोपलभ्यते ; तत्त्वटीकायाम् 'आदिशब्देन' इत्यनुगृहीतत्वात् 'इत्यादय.' इति पाठ आदृतः

२ 'परम'. पा. (सु, ख) इति कोशयो न

योजना। य इति वाध्याहारः। **तदेकं पश्यति** इत्यत्र कर्तृकर्मभेदव्युदासोऽप्यभिप्रेतः। शब्दजन्यप्रत्यक्षाभिप्रायेण पश्यतीत्याद्युक्तिः। दृगधीनसिद्धेरविद्यायास्तत्कार्याणां रोगादीनामदर्शनमत्र साध्यमित्याह—**न पश्य** इति। निर्विशेषात्मैक्यबुद्धिदार्ढ्यानन्तरमेव भयनिवृत्त्या तत्कारणाविद्यानिवृत्तिसूचनमाह—**यदा हि** इति। **अदृश्ये**—दृक्कर्मत्वरहिते। **अनात्म्ये**—अशरीरे; आत्मना व्याप्यं हि शरीरमात्म्यम्। **अनिरुक्ते**—अशब्दगोचरे। **अनिलयने**—अनाधारे। यद्वा निलीयतेऽस्मिन्नध्यस्तैरिति निलयनमविद्या तद्रहिते। **अभयम्** इति प्रतिष्ठाविशेषणम्, लिङ्गव्यत्ययश्छान्दसः क्रियाविशेषणं वा अव्ययीभावेन भयाभावायेति वा; **अथ सोऽभयं गतः** इति फलोक्तिसंवादात्। **प्रतिष्ठाम्**—ऐक्यबुद्ध्या स्थितिमित्यर्थः। बन्धकतया सिद्धान्तीष्टानां कर्मपर्यन्तानामपि धीनिवर्त्यत्वेन मिथ्यात्वं दर्शयति—**भिद्यते** इति। **हृदयग्रन्थिः**—अविद्या। संशयादि तत्कार्यमिति [1] सकार्याविद्यानिवृत्तिरिहोक्ता। ननु "तादृगेव भवति" "निरञ्जनः परमं साम्यमुपैति" "सोऽश्नुते सर्वान्कामान्सह। ब्रह्मणा [2] विपश्चिता" इत्यादिषु फलदशायां तादृक्त्वसाम्यभेदोक्तिस्वारस्यात् "पृथगात्मानम्" [3] इत्युक्तेश्च भेदज्ञानमेव मुक्तिहेतुः स्यादित्यत्राह—**ब्रह्म वेद** इति। अत्राविद्याकृतभेदनिवृत्तिरवधारणद्योत्या। न ह्यत्र तद्भूतरयातद्भूतस्य वा तद्भावः साध्यः; कर्मसमुच्चयादिनिरासार्थमैक्यज्ञानेनाविद्यातरणव्यक्त्यर्थं चाह—**तमेव** इति। "वेदाहमेतं पुरुषं [4] महान्तम्" इति सर्वलोकप्रत्यक्षसिद्धजीवैक्येन

---

१. तत्कार्याविद्यानिवृत्तिः (क).
२. ब्रह्मणा इत्यादिषु. पा. (क, ख, घ).
३ इत्युक्तेर्भेद. पा. (क, ख, घ)
४ 'महान्तम्' इति (क, ख, घ) कोशेषु न.

प्रकृतो यत्र 'तम्' इति परामृश्यत इति भावः। इदं वाक्यद्वयं [1] ज्ञानमेव मोक्षसाधनत्वाय प्रागुपात्तम्; इह त्वविद्यानिवृत्त्यतिरिक्तसाध्यनिरासार्थम्। "नान्यः पन्थाः" इति [2] कर्मनिषेधपरम्। **आदि** शब्देन "ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्" इत्यादिसंग्रहः। श्रुतय इति प्रकृत्या बहुवचनेन च [3] श्रुतस्यैव ग्राह्यत्वं मिथस्संवादेन दार्ढ्यं च गम्यते। उपात्तवाक्येष्वविद्यानिवृत्तिर्न भाति; मृत्युशब्दस्तु अर्थान्तरेऽपि स्यादित्यत्राह—**अत्र** इति। मोक्षोपायवाक्येषु ज्ञाननिवर्त्यविषयत्वौचित्यादस्याविद्यात्वमिति भावः। प्रसिद्धिविरोधिशङ्कां निरस्यति—**यथा** इति। **प्रमादः**—अनवधानता अज्ञानम्। कार्येण वा कारणलक्षणा। **अप्रमादम्**—अविद्यानिवृत्तिम्। यद्वा–अत्र अमृतत्वसाधनतयोक्तः अप्रमादस्तत्त्वज्ञानम्; तत्प्रतिपक्षः प्रमादोऽन्यत्राज्ञानमेव। **अहं ब्रवीमि** इति तत्त्ववित्सिद्धान्त [4] ख्यापनपरम्।

"सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावमेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" "अकृत्स्नो ह्येषः—आत्मेत्येवोपासीत" "तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव—"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। तथा च

---

1. ज्ञानस्यैव मोक्षसाधन. पा. (क, ख, घ). 2. तु निषेधपरम्. पा. (ङ).
3. श्रुतस्य ग्राह्यत्वम् पा (क, ख, घ) 4. ख्यापनम्. पा. (ङ).

**वाक्यकारः—"आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेः" इति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥**

ब्रह्मणो निर्विशेषत्वं जीवतादात्म्यमैक्यज्ञानस्य मुक्तिहेतुत्वं च नैतेषु व्यक्तं भातीत्यत्र [1] शोधयन्निर्विशेषत्वमुपायपरवाक्यैस्तत्त्वनिर्देशैस्तदनुसन्धानपरैश्च वाक्यैर्जीवैक्यज्ञानसिद्धिं चाह—**सत्यम्** इति । **त्वं वा** इत्यादिना देवतां प्रति उक्तस्यैव तदर्थस्य—**तद्योऽहम्** इत्यादिना स्वस्मिन्ननुसन्धानं [2] स्थापयति । उक्तस्य सूत्रकृदिष्टत्वमाह—**वक्ष्यति** इति । **एतदेव**; न त्वदिष्टमिति भावः । **आत्मेति**—स्वानन्यत्वेनेति यावत् । सूत्राभिप्रेतं तद्विदुक्त्या स्पष्टयति—**तथा** इति । **सर्वस्य तन्निष्पत्तेः**—भातस्य सर्वस्य तस्मिन्नध्यस्तत्वादित्यर्थः ; बाधावस्थाया-मधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादिति भावः । अद्वैतधीकरणस्य वाक्यस्य सूत्रवाक्याभ्यां सूचितमनुग्राहकं वचः "सन्मूलाः" इत्यादिना प्रागुक्तमेव । चोद्योत्थापनायाह—**अनेन** इति । [3] सत्यभेदबाधस्वरसेनेति भावः । **च**: पूर्ववदुभयार्थः । द्वितीयाद्वै भयं भवतीत्यादिसूचनाय **ब्रह्मात्मैक-त्वोक्तिः** । मिथ्याभूतस्य ज्ञानेतरकर्मनिवर्त्यत्वे सत्यत्वं स्यात्, तच्च मानविरुद्धम् ; न च रज्जुसर्पादिनिवृत्तौ मन्त्रौषधदण्डघाताद्यपेक्षेति भावः । अपुनरङ्कुरत्वाय **सकारणत्वोक्तिः** ॥

---

१. शोधकैः पा (क)  २ स्थाप्यते पा (क, ख, घ).

३. सत्यभेदस्वरसेन. पा. (ख).

ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्य[1]विज्ञानेन क्रियते? कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते? तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्ः तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः? पूर्वोत्तरयो-[illegible]न्वयतदभावाभ्यामिति चेत्; शास्त्रप्रत्यक्षयोरपि समानमेतत्। एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादिः [2] अकारणम्ः ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्सम्भाव्यमानान्यथासिद्धि तद्बाध्यम्। अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति। तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोपगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्ध [3] बुद्धमुक्तस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्पप्रपञ्चनिवृत्तिर्युक्तैव। सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यगज्ञानादिभेदवासनादिरूपाविद्याख्यो दोषः॥

आस्तामनुकूलस्तर्कः, प्रतिकूलस्तु सिद्ध इत्यभिप्रायेण चोदयति—ननु च इति। बाधकतयेष्टयोः शास्त्रानुमानयोः शब्दार्थस्वरूपतद्व्युत्पत्तीनां [4] व्याप्तिधर्मलिङ्गादीनां च सिद्ध्यर्थमुपजीव्यं प्रत्यक्षं न ताभ्यां बाध्येत। अन्यथा—आदित्यो यूपः, पावकोऽनुष्ण इत्यादेरपि प्रत्यक्षबाध-

शास्त्रजन्यविज्ञानेन प्रपञ्चनिवृत्त्युपपत्तिः

१. 'ज्ञानेन' इति पाठभेद.. २. 'न कारणम्' इति बहुषु पाठभेद.
टि—तत्त्वटीकानुसारेण 'अकारणम्' इति पाठ आदृत·
३. 'मुक्तबुद्ध' इति पाठभेद ४. व्याप्तिधर्मि पा. (क, ख, घ).

कत्वं स्यात्। चन्द्रादिभेदबाधकस्य [1] तु तत् नोपजीव्यमित्यभिप्रायेण सकल-शब्दः । [2] सकलभेदबाधे [3] ह्युपजीव्यबाधोऽप्यन्तर्गतः। कथमिव—न कथञ्चित्; प्रत्यक्षविरुद्धं शास्त्रमेव बाधितमुख्यार्थं भाक्तं नेयमिति भावः।

अत्र किं प्रत्यक्षत्वान्न बाध्यम्, उत परोक्षत्वान्मूलित्वाच्च न मिति शङ्काद्वये प्रथमं परिहरति—कथं वा इति। प्रत्यक्षशब्द इह परः; बाधात्पूर्वमनाभासत्वाभिमानो बाधश्च [4] प्रपञ्चरज्जुसर्पभ्रमयोः भावः। मूलित्वादिना न शास्त्रं बाधकमिति शङ्कते—तत्र इति। क्षयोः—अपरोक्षयोरित्यर्थः। इदं च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोर क्षणम्। अत एवेह दूष्यं निष्कृष्यानुवक्ति—इह इति। सकलभेदनि त्यर्थः। वैषम्यव्यक्त्यै तुशब्दः। प्रत्यक्षशब्दोऽत्र प्रत्यक्षप्रमाणविषय द्वयोः प्रत्यक्षयोः इत्युक्तस्य तुल्यबलत्वस्य बाधं प्रत्यप्रयोजकत्वात्, अन्य * प्रकरणसमेऽतिप्रसङ्गाद् विपरिवर्तप्रसङ्गाच्चान्यत्प्रयोजकं शिक्षयितुमाह—तुल्ययोः इति। चोद्यत्रयनिवृत्त्यै सिद्धान्तीष्टं प्रयोजकं शङ्कते—पूर्व इति। पूर्वं त्तरयोरिति क्रमो न नियतः। उक्तं [5] प्रयोजकमपि प्रस्तुते तावदस्तीत्याह—शास्त्र इति। शास्त्रशब्द इह तज्जन्मधीलक्षकः। धीद्वयविवेकार्थं विशेषविवक्षया वा [6] तत्कारणेऽन्वयोक्तिः। एतत्—वैषम्यमित्यर्थः। ननु दुष्टहेतुजत्वस्य बाध्यताहेतुत्वमुपजीव्यत्वाद्यभावेन तुल्यत्वे सति स्यात्, उपजीव्यबाधे चाधर्मत्व-

---

१. तु नोपजीव्य इत्यभि. पा (क, ख), कृत्स्नोपजीव्य· पा. (घ)

२. सर्व. पा. (सु, क, घ)

३ 'अप्यु' पा. (सु, ख, घ)

४. बाधकत्वमिति. पा. (सु)

* टि—प्रकरणसमे–सत्प्रतिपक्षे

५. प्रयोजकत्वमपि. पा. (सु).

६. तत्करणे. पा. (सु, घ)

साधकहिंसाद्यपि प्रमाणं स्यादित्यत्राह—**एतदुक्तम्** इति। तुल्यत्वोक्तिर्दृष्टान्तार्था। तद्विशिष्टं वा दुष्टहेतुजन्यत्वादिकं विवक्षितम्। आदिशब्देनोपक्रमापच्छेदाधिकरणोक्तनियतानियतपौर्वापर्यादेः परोक्षत्वादेश्च संग्रहः। **अकारणम्**—अप्रयोजकम्; अव्याप्तेरिति शेषः। उक्तमर्थमुदाहरणस्थेन तर्केण द्रढयति—**ज्वाला** इति। कारणं [1] चेदित्यध्याहार्यम्। **अयोगात्** इति प्रसज्यमानोक्तिः। ननु प्रत्यक्षं [2] वर्तमानग्राहितया ज्वालास्वरूपं गृह्णाति; भिन्नसन्तताविव [3]सूक्ष्मदृशामेकसन्ततावपि ज्वालाभेदः प्रत्यक्षसिद्ध इत्यत्राह—**तत्र** इति। प्रत्यक्षशब्द इह प्रत्यभिज्ञाख्यविशेषविषयः। सा चात्र [4] भ्रान्तिरूपा पटुतरदृष्टीनामपि पूर्वापरकालवर्त्यैक्यविषया [*] अत्यन्तसादृश्यसादेश्या[न्यादृश्य]दिभिर्जायत एव। अतो विरोधो बाधश्चात्र सिद्ध इति भावः। तर्हि प्रसिद्धस्याप्रयोजकत्वे प्रयोज्यं निष्कारणं स्यादित्यत्राह—**एवं च सति** इति। **चः** शङ्कानिवृत्त्यर्थः समुच्चयार्थो वा; अव्याप्त्या च सह [5]तर्कबाधे च सतीति यावत्। सजातीययोर्विजातीययोर्वेति [6] न निर्बन्ध इत्यभिप्रायेण **द्वयोः** इत्युक्तम्। **प्रमाणयोः** बलविमर्शात्पूर्वं [7] मानत्वेन भातयोरित्यर्थः। **विरोधे**- [8] मिथो विषयापहाररूपे। **अन्यथासिद्धिः**—स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभः। तत्र हेतुत्वेन सावकाशत्वमाकृष्टव्यम्। तच्च द्विचन्द्रादिधीवदप्रमाण-

---

१. चेदिदम. पा. (सु) २. प्रवर्तमानग्राहित्वात्. पा. (सु).

३. च सूक्ष्म पा. (ख, घ) ४. अभ्रान्ति. पा. (क, घ).

* टि—(सु) कोशे 'सौसादृश्यावसाय' इति; (क, ख, घ) कोशेषु "अत्यन्तसादृश्यसादेयो" इति च दृश्यते; 'सादेय' इत्यत्रार्थस्वारस्यात् 'सादेश्य' इति भाव्यम् इति भाति.

५. तद्भावे. पा (सु) ६. न इति (ख, घ). कोशयोर्नोपलभ्यते.

७. अनुमानत्वेन पा. (घ). ८. मिथोऽपहार पा. (सु)

कोटिनिवेशार्हत्वाद्वा पदाहवनीयादिनयेन [1] अविरुद्धविषयलाभाद्वा स्यात् । **अनन्यथासिद्धम्**—स्वविषयमिथ्यात्वेऽनुपपन्नस्वरूपं [2] विरुद्धमबाधित्वोत्पत्तुम् [3] अनर्हत्वाद्वा । तत्र **हेतुरनवकाशत्वम्**; तच्च [4] पूर्वोक्तावकाशद्वयाभावसमुच्चयरूपम् । **इतरत्**; अनादृतसाजात्यादिविशेषमिति भावः । **सर्वत्र**; तुल्यातुल्योदाहरणेषु तार्तीयबाधस्थलेषु चेत्यर्थः । **निर्णयः**—प्रमाणतर्कसिद्धोऽध्यवसायः । **इति**शब्दः पूर्वो हेतौ, [5] उत्तरः समाप्तौ । [6] 'समानमेतत्' इत्यत्राभिप्रेतं शास्त्रप्राबल्यं विवृण्वन् 'एतदुक्तम्' इति प्रक्रान्तं निगमयति—**तस्मात्** इति । अस्मदुक्तस्यैव प्रयोजकत्वादित्यर्थः । यद्यपि—अविद्यानिवृत्तौ वेदोऽपि न स्यात्; [7] तथापि सर्गप्रलयकालेषूत्पत्तिनाशाभावात् **अनादिनिधन**त्वोक्तिः । तद्विषयैव—

"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा"। इति स्मृतिरिति भावः । **अविच्छिन्नसम्प्रदाय**त्वोक्त्या मन्वन्तरादिष्वविच्छेदेन विप्लवासम्भवः सूच्यते ।

"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते।" इत्येतदपि कालविशेषाद्यनुगुणशाखाविशेषप्रवर्तनपरम्; अन्यथा "ब्रह्म स्वयम्भ्वभ्यानर्षत्" इत्यादिभिर्विरोधात्; स्मर्तव्यत्वे सत्यस्मर्यमाणकर्तृकत्वादित्यपौरुषेयत्वसाधकं चात्र सूचितम् । अत एव वक्तृदोषासम्भवः । मन्वाद्याप्तवाक्यानां श्रुतिविरोधे क्वचिद्बाध इष्टः, न तथेत्यभिप्रायेण **गन्ध**शब्दः । एव-

---

१. अविरुद्धार्थविषय पा (घ).
२. अविरुद्धम्. पा. (मु).
३ अर्हत्वात्. पा. (मु).
४ पूर्वोक्तद्वयावकाश. पा. (मु).
५. इतरः. पा. (क, ख, घ)
६. समानमित्यत्र. पा (मु).
७ अथापि. पा. (घ)

मप्रमाणकोटिनिवेशोऽपास्तः। विरुद्धविषयोऽपि नास्तीति व्यक्त्यै निर्विशेषत्वा-द्युक्तिः। नित्यशब्दः शुद्धत्वादौ सर्वत्र योज्यः, अबाधपरो वा। शुद्धम्—अविद्यासाक्षित्वावस्थायामपि वस्तुतस्तद्रहितम्। तेन बुद्धम्—अतिरोहितनित्य-प्रकाशम्। तत एव मुक्तम्—सर्वदा कर्मतत्फलवियुक्तम्। स्वप्रकाशम्—मिथ्यात्वप्रयोजकदृश्यत्वोज्झितम्। तत्र हेतुश्चिद्रूपत्वम्। अत्र निषेधकज्ञा-नाश्रयत्वस्यापि [1] मिथ्यात्वव्यक्त्यै मात्रशब्दः। ब्रह्मात्मभावः—ब्रह्मण एव प्रत्य-गात्मत्वम्। प्रत्यक्षस्य सम्भाव्यमानदोषत्वं प्राचुर्येणान्यत्र दोषदर्शनादन्यत्रापि दोषशङ्कार्हत्वम्। तत एवानुमानादेरपि शङ्कित [2] दोषत्वाय आदिशब्दः। देवादि-भेदैस्तदवान्तरैश्च बन्धस्य विविधविकल्परूपत्वम्; विशेषतः कल्प्यत इति विकल्पः। एवकारः—प्रतिकूलतर्कासम्भवपरः। ननु काचाद्यभावान्निर्दोषत्वेन [3] प्रसिद्धेः प्रत्यक्षे दोषो दुर्वचः; तज्जातीये दोषदृष्टयान्यत्र [4] अपि तत्कृतौ वेदे वाक्यत्वादिभि-स्तथा कृतिः स्यादित्यत्राह—सम्भाव्यते इति। चः शङ्कानिवृत्त्यर्थः, बाधक-प्रत्ययेन सह [5] कारणदोषनिश्चयस्य समुच्चयार्थो वा। [6] भेदप्रपञ्चः निजकर्मभेद-विभिन्नचित्तैरविद्याकल्पितश्चिदचिद्विस्तारः। प्रत्यक्षस्य इति भेदग्राहकमात्रस्यो-पलक्षणम्। आदिशब्देन मूलाविद्यां भेददृष्टिं च सङ्गृह्णाति। एतेषु यथार्ह-मन्योन्याश्रयादिनिरासाय अनादिशब्दः। एतेषां दोषत्वम् "वासनारेणुकुण्ठितः" "अविद्यासञ्चितं कर्म" इत्यादिभिस्सिद्धम्।

ननु अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य

---

१. मिथ्यात्वज्ञप्त्यै. पा. (क, ख, घ)
२ दोषत्वादत्र. पा. (सु).
३. प्रसिद्धे. पा. (सु).
४. 'अपि' इति (घ). कोशे न.
५. कारणदोषद्वयस्य. पा. (सु).
६. "भेदप्रपञ्च—विस्तारः" इतीदृशी पङ्क्तिः (सु) कोशे न दृश्यते.

"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत ; सत्यम्—पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः ; निर्गुणत्वात्परस्य ब्रह्मणः । ननु च "यस्सर्वज्ञस्सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामस्सत्यसङ्कल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां [1]शास्त्राणां कथं बाध्यत्वम् ? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ।

भेदग्राहकप्रत्यक्षादीनामद्वैतश्रुतिविरोधाद्बाध्यत्वमुक्तम् ; तत्रातिप्रसक्त्या चोदयति—ननु इति । अपिः [2]सदोषनिर्दोषसमुच्चयार्थः, विरोधार्थो वा । श्रुतीनामपच्छेदन्यायेन बाध्यबाधकभावः बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै ज्योतिष्टोमाद्युक्तिः । द्वैतीयभेदावलम्बिनी तृतीयादिदशाध्यायी । आदिशब्देन कर्मविध्यन्तरसंग्रहः । बाध्यत्वोक्त्या प्रमाणलक्षणविरोधोऽपि सूचितः । तत्र [3]धर्मप्रमाणस्य साकल्येनांशतोऽपि वा पादेन वा त्रिपाद्या [4]वा ह्यप्रामाण्यमपाकृतम् । इष्टप्रसङ्गोऽयमित्याह—सत्यम् इति । यद्वा—बाध्यत्वमस्ति ; तावता सदोषत्वमप्रामाण्यं च न स्यादित्यर्धाङ्गीकारः ; मिथ्यात्वेऽपि दृष्टिविधिनयात् साध्यसाधनभावे व्यावहारिकं प्रामाण्यमिति भावः । अङ्गीकृतं निर्दोषस्य बाध्यत्वांशं

---

१ 'शास्त्राणाम्' इति पाठभेद.
२. सदोषत्वनिर्दोषत्वसमु पा (सु).
३. धर्मप्रामाण्यस्य पा. (सु).
४. बाह्य. पा. (सु).

[१] पौर्वापर्यरूपविशेषेऽपि स्वोक्तबाधप्रयोजकव्याप्तिं च श्रौतदृष्टान्तेन विवृणोति— पूर्वं इति । मोक्षशास्त्रस्य—बन्धरूपभेद [२] निवर्तकतत्त्वावेदकवाक्यस्येत्यर्थः । "पञ्च ऋत्विजः समन्वारब्धाः सर्पन्ति। अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमानः" इत्यस्मिन् प्रयोगे "यदि बहिष्पवमानं [३] सर्पतां प्रस्तोतापच्छिद्येत" इत्यादिनापच्छेदप्रायश्चित्तविधौ "यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत सर्ववेदसं दद्यात्, यद्युद्गाता यज्ञेन यजमानो व्यृध्येतादक्षिणः स यज्ञः संस्थाप्यः" इत्युक्तम् । तदिदं [४] नैमित्तिकद्वयमेकस्मिन्प्रयोगे विरुद्धम् । तत्र युगपदपच्छेदे [५] उद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तं वा [६] कार्यम् । पूर्वापरापच्छेदे यो जघन्योऽपच्छिद्येत तस्य [७] प्रायश्चित्तमेवेति व्यवस्थापितम् । तदुक्तम्—"पूर्वापरापच्छेदे [*] पूर्वदौर्बल्यं प्रकृतिवत्" इति । अत्रैवं पूर्वपक्षः—उपक्रमनयेनासञ्जातविरोधि-[८] तयोदितत्वात्पूर्वस्य प्राबल्यम् । परस्य [९] तूदितविपक्षसन्निधावेव प्रवृत्तेर्दौर्बल्यमिति । सिद्धान्तस्तु—परस्मिन्ननुत्पन्ने तदसन्निधानात्परमबाधित्वा पूर्वस्योदयः । इतरस्य तु पूर्वोदितविरोध्यबाधेनोदयायोगान्निमित्तोदये नैमित्तिकशास्त्रोदयावश्यम्भावाच्च परप्राबल्यम् । उपक्रमोपसंहारयोस्तु विरुद्धस्य परस्यानुदय एव [१०] इति । इह तु कर्मिणां भुक्तौ पूर्वप्रावण्येनार्थक्रमात् तदनुगुणपाठक्रमाच्चापच्छेदवत्पूर्ववृत्त-

---

१. पौर्वापर्यविशेषे. पा. (सु). २. निवर्तकत्वावेदकवेदवाक्यस्य. पा. (सु).
३. प्रसर्पताम्. पा. (सु). ४. नैमित्तिकमेक. पा. (सु).
५ उद्गातृप्रायश्चित्त वा प्रतिहर्तुः प्रायश्चित्त वा कार्यम् पा (सु)
६ 'कार्यम्' इति (क, ख, घ) कोशेषु न. ७. प्रायश्चित्तमिति पा (क, ख, घ.)
८. नयोदितत्वात्. पा. (सु), ९ "तूदित—पूर्वो" इति पङ्क्ति (ख) कोशे न.
"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति सूत्रानुपूर्वी
१०. 'इति' इति (क, ख, घ). कोशेषु न.

कर्मशास्त्रोपमर्देन भोगनिवृत्तिरूपमुक्तिशास्त्रोदयः । ईदृशोदाहरणेष्वेव

[1] "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति।"

इत्युच्यते । एवमुत्सर्गापवादाद्युदाहरणान्तरेष्वपि निर्दोषवाक्यासिद्धस्य निरवकाशेन [2] बाधो निदर्शनीयः । ननु वेदान्तेष्वपि सगुणोपास्तिविधीनां भेदावलम्बित्वं सिद्धम् । न च तेषां निर्गुणवाक्यापेक्षया पूर्वत्वनियमः; अतस्तेषु नापच्छेदनीतिरित्यत्राह—**वेदान्त** इति । **सगुणब्रह्मोक्तिर्दृष्ट्यादेरुपलक्षणार्था। उपासनपराणाम्**—इत्यनेन सिद्धे तात्पर्यं नास्तीति व्यज्यते। पौर्वापर्याभावेऽपि तत्फलभूतबाधस्य तात्पर्यलब्धत्वदर्शनात् **अयमेव न्यायः** इत्युक्तम्। "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" "जक्षत्क्रीडन्" इत्यादिसांसारिकफलोक्त्या तादृशविद्यानां मोक्षशास्त्रापेक्षया कर्मशास्त्रवत् [3] आर्थं पूर्वत्वं च सिद्धम् । यद्वा—निर्दोषत्वेऽपि निरवकाशवाक्येन [4] बाधः स्यादित्युक्त एव न्याय इत्यर्थः । गुणविधिरेवात्रालम्भविधिन्यायान्निरवकाश इत्यत्राह—**निर्गुणत्वात्** इति । निर्विशेषस्वरूपपरतया [5] निरवकाशैः वाक्यैर्गुणबाधादिति भावः। विधिपदानन्वयेन सिद्धविषयाणां सगुणवाक्यानां पूर्वत्वान्यपर्ययोरयोगात् न बाध्यत्वं स्यादित्यभिप्रायेण चोदयति–**ननु च** इति । **कथम्** इति प्रतिक्षेपवचनं प्रश्नवद्भावयन् पौर्वापर्यमभिसन्धाय प्रतिवक्ति—**निर्गुण** इति ।

**एतदुक्तं भवति–"अस्थूलमनण्वह्रस्व [6] मदीर्घम्" "सत्यं ज्ञानमनन्तं**

---

१. पूर्वबाधेन पा (सु). २. बोध. पा. (ख, घ)
३ आर्थत्वम् पा. (सु). ४. न बाध पा (क).
५. निरवकाशवाक्यै.. पा. (सु) ६. 'अदीर्घम्' इति पाठभेद .

ब्रह्म" "निर्गुणम्" "निरञ्जनम्" [1] इत्यादीनि वाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति, इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचि [2] दपहीनम्।

अनन्यपरसगुणवाक्यबाधसमर्थानि कानि वाक्यानि? तेषां च तद्बाधे कीदृशं सामर्थ्यम्? इत्यत्राह—**एतदुक्तम्** इति। **कूटस्थम्**—विश्वविकाराध्यासे [3] तन्निवृत्तौ च स्वयं कूटवत् [4] अविकृतम्; कूटे अध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन [5] स्थितम्। **इतराणि**—उपात्तानि 'यस्सर्वज्ञः' इत्यादीनि तादृशान्यपि। चस्त्वर्थः विरुद्धवर्गद्वयसमुच्चयपरो वा। [6] **तेनैव** भुक्तिमुक्तिशास्त्रयोरिह प्रदर्शितेनैवेत्यर्थः। निषेध्यप्रसञ्जकापेक्षया निषेधकस्य परत्वमर्थसिद्धमित्यभिप्रायेण **गुणापेक्षत्वेन** इत्युक्तम्। सगुणवाक्यानां निर्दोषत्वेऽप्यार्थेन पूर्वत्वेन बाध्यत्वम् उपास्तिविधिशेषत्वक्लृप्त्या साफल्यात्कथञ्चित्प्रामाण्यं च स्यादित्यभिप्रायेणाह—**न किञ्चित्** इति।

ननु च—"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते। नेत्युच्यते; सामानाधिकरण्येनैकार्थत्वप्रतीतेः। अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्–अनभिधानज्ञो [7] देवानांप्रियः।

---

१. 'इत्यादिवाक्यानि' इति पाठभेदः.
२. दवहीनम्. इति पाठभेद..
३ तन्निवृत्तौ स्वयम्. पा. (घ).
४. स्थितम् पा (सु)
५ स्थित वा पा (सु).
६. अनेनैव भुक्ति पा. (सु).
७. 'हि' इति पाठभेद.

**एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । [1] ततश्च एकार्थत्वं न सिध्यति। एवं तर्हि सर्वपदानां पर्यायता स्यात्; अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु—एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधि [2] प्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च ।**

अत्र सत्यत्वादिविशिष्टपरं वाक्यं कथं निर्गुणवाक्यतयोपात्तमिति चोदयति—**ननु च** इति। **सत्यज्ञानादयः**; " द्व्येकयोः " इतिवद्भावप्रधानोक्तिः । [3] आनन्त्यमपि व्यापित्वरूपो गुण इति बुद्ध्या बहुवचनम् । अयं भावः—अत्र गुणप्रतीतिर्नापह्नोतुं शक्या; तस्याश्च बाधाभावात् स्वतः प्रमात्वं सुस्थमिति । नेयं प्रमितिरिति युक्त्या स्थापयिष्यत इत्याह—**नेत्युच्यते** इति । एकार्थतात्पर्यार्हत्वरूपवृत्त्या गुणभेदधीर्बाध्येत्याह—**सामानाधिकरण्येन** इति । कारकभेद [4] क्रियैकत्वबुद्ध्योरिव विशेषणभेदविशेष्यैक्याधयोरविरोधान्न बाध्यबाधकतेति चोदयति—**अनेक** इति । समानाधिकरणव्यधिकरणपदानां वृत्तिवैषम्यमेकार्थशब्देनान्ययोगव्यवच्छेदं च न जानासीत्युपालम्भमुखेन [5] प्रतिवक्ति—**अनभिधान** इति । **देवानांप्रिय**—इति [6] अज्ञातनाम्नामुपचारप्रयोगः; इह त्वप्रख्यात इत्यर्थः । छाग इत्येके; तदाप्यज्ञ इति यावत् । तदज्ञातं स्वाभिप्रेतं विवृणोति—**एकार्थत्वम्** इति । त्रेधा हि पदानामर्थैक्यम्—प्रकृति-

सगुणवाक्यानां निर्गुणपरत्वम्

---

१. ततश्चैकत्व न. इति पाठभेद. २. प्रत्यनीकपरत्वेन. इति पाठान्तरम्.

३. आनन्त्यमव्यापित्व. पा. (ख, घ), आनन्त्यं व्यापित्वरूप. पा (क).

४. क्रियैक्य. पा. (ख). ५. वक्ति. पा. (ख).

६ अनिर्ज्ञात. पा. (घ).

[illegible]बोध्यप्रातिस्विकविशेष्यैक्यम्, "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागं स्यात्" इत्येतावता मिथोऽन्वितार्थपदजातबोध्यप्रधानैक्यम्, पदभेदेऽर्थ[illegible]ति। तेष्वाद्यं पदमात्रे; द्वितीयं व्यधिकरणवाक्ये; तत्र तृतीयमिह मदुक्तम्: तच्च—"भिन्नप्रवृत्तिनिमित्तानां शब्दानाम्" इत्यादिपतञ्जलिवाक्यत्रसिद्धमित्यभिप्रायेण नामशब्दः। [1] एवमप्यस्य प्रधानप्रतिपाद्यविशेष्यभेदाभावमात्रपरत्वे को विरोध इत्यत्राह—**विशिष्ट** इति। **विशेषणभेदेन** इत्येतत् बहुधा योज्यम्—विशेषणानां मिथो विशेष्याच्च भेदेन विशेषणभेदेनैव [illegible]द्विशेष्यभेदप्रसङ्गेन चेति।

भेदकं हि स्वभावेन प्रत्यक्षाद्यनिराकृतम्।
विशेषणान्तराधारात् स्वाधारं भेत्तुमर्हति ॥ ३३९ ॥

श्यामो युवा इत्यादौ दृष्टत्वादेव विशेषणानां भेदकत्वस्वभावोऽपोदितः। इह तु भेदकं विशेषणं भेद्यं विशेष्यमिति व्यवस्थाया नित्यातीन्द्रिये शब्दोपस्थाप्ये कः प्रतिरोद्धा; अनावृत्त एकवचनान्तो विशेष्यशब्द इति चेन्न—[2] जात्यैक्यविवक्षयापि तदुपपत्तेः; यथा—खण्डो मुण्डो गौरिति। प्रत्यक्षबलात्तत्र भेद इति चेन्न; अप्रत्यक्षेऽपि तथोक्तौ व्यक्तिभेदबुद्धेः, तद्वद्ब्रह्मणि। किञ्च तेन तेन पदेनोद्दिष्टे विशिष्टे पदान्तरार्थविधौ विशेषणानां मिथः समवायः स्यात्, उपादेयस्य यावदुद्देशव्यापित्वात्; तथा च तेषां विशेषणस्वरूपाद्भेदेन नानाविशिष्टापत्तिः। किञ्च—

विशिष्टार्थाभिधायित्वे भेदकेष्वपि भेद्यवत्।
अन्योन्यसमवायैक्यप्रसङ्गौ चात्र तन्त्रितौ ॥ ३४० ॥

---

१. एवमस्य पा (ख)    २. जात्यैकत्व. पा. (मु).

तथा हि—विशेषणभेदेन विशेषणानां परस्परसमवायतादात्म्याभ्यामन्यथाभावेन पदानामव्युत्पन्नाप्रामाणिकार्थभेदः, विशिष्टविधावपि समानविभक्तिर्विशेष्यांशमिव विशेषणांशमप्येकीकुर्यात्; प्रकृत्युपस्थापितैक्यपरत्वात्। तदापि स्वान्यैक्याद्विशेषणानां स्वस्माद्भेदः स्यात् इत्यादयः प्रसङ्गा इहाभिप्रेताः। एतैः फलितं प्रसङ्गान्तरमाह—**तत** इति। विशिष्टस्यैवमनभिधेयत्वे विशेषणमात्रोक्तिर्दूरापास्तेति मत्वा विशेष्यमात्रपक्षे चोदयति—**एवं तर्हि** इति; उक्तप्रकारेण विशेष्यमात्रपरत्वे सतीत्यर्थः। भिन्ननिमित्तानामनुपपत्त्या निमित्तत्यागे कथं पर्यायत्वमित्यत्राह—**अविशिष्ट** इति; एकपदोक्तमात्राभिधायित्वादिति यावत्। अत एव पदान्तरवैयर्थ्यात्पर्यायत्वं सामानाधिकरण्यभङ्गश्च स्यात्। आहुश्च—

१ "नातत्तन्मन्यसे तावन्न २ तत्तदपि मंस्यसे।
सामानाधिकरण्यं हि रूपभेदमपेक्षते॥" इति।

विवक्षितस्य लोकोत्तीर्णत्वान्नैतत्त्वरमाणेन लभ्यमित्यवहितेन क्रमेणेदं बोद्धव्यमित्यभिप्रायेणाह—**एकार्थाभिधायित्वेऽपि** इति। उक्तप्रसञ्जकानुवादोऽयम्। तेन त्वदुक्तं न प्रसज्यत इत्याह—**एकत्व** इति। अयं भावः—वाक्यतात्पर्यानुसारेण हि सर्वत्रोपचारः। अत्र च स्वरूपप्रबुभुत्सया समानविभक्त्या चार्थैक्ये तात्पर्यं निश्चितम्। तेन विशेषणाभिधानं त्यक्तम्; तत्फलभूतव्यावृत्तिपरत्वं तु स्थितम्। तदिह विरोधिव्यावृत्तिभेदैः प्रतिपदं प्रयोजनं सामानाधिकरण्य-

---

१. नातत्तम्. पा (मु).    २ तत्तमपि. पा. (मु).

लक्षणानुगुणमैकार्थ्यम् निमित्तभेदव्युत्पत्तिफलैः पर्यायत्वनिरासश्च स्यादिति । उक्तं च सुरेश्वराचार्यैः—

"प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत्ततदात् ॥

शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन [1] स स्मृतः ॥

तत्रानन्तोऽनन्तवस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाड्यैव [2] परिशिष्टौ विशेषणम् ॥" [3] इति ॥

तद्विरोध्यभेदिनश्चाहुः—

"व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता" इति ।

एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो [4] व्यावृत्तब्रह्मपरम् । ज्ञानपदं चान्याधीन-[5] प्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम् । [6] अनन्तपदं च देशतः कालतो

---

१ 'सस्मृत.' इति सर्वत्र मातृकासु दृश्यते, तैत्तिरीयोपनिषद्भाष्यवार्तिकानुसारेण 'स स्मृतः' इति पाठ आदृत·.

२. 'परिशिष्टो' इति मातृकास्थ· पाठ· ; "परिशिष्टौ" इति आकरग्रन्थस्थ· पाठ आदृतः.

३ 'इति' इति (सु) कोश एव दृश्यते

४. व्यावृत्तपरम् . इति पाठविशेष:

प्रकाशाज्जड. इति पाठान्तरम् .

६. 'अनन्तपदं देशतः' इति पाठभेदः.

वस्तुतश्च [1] परिच्छिन्नाद्व्यावृत्तपरम्। न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः; अपि तु सकलेतरविरोधि ब्रह्मैव। यथा—शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः [2] तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। [3] एकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् [4]। तस्मादेकमेव ब्रह्म स्वयञ्ज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिभिरैकार्थ्यम्। "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते; अन्यथा [5] "निर्गुणम्" "निरञ्जनम्" इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैक-[6] रसमेव प्रतिपादयति॥

ननु [7] एकत्वतात्पर्येऽपि तत्त्वमस्यादिवदुपलक्षणमुखेन स्वरूपैक्य [8] परत्वमस्तु,

---

१. 'परिच्छिन्नव्यावृत्तपरम्' इति पाठान्तरम्
२. 'तत्पदा' इति पाठभेद.
३. 'एवमेकस्यैव' इति पाठभेद.
४. 'इति' इति पाठभेद.
५. "निरञ्जनम्" "निर्गुणम्" इति पाठविशेष
६. "रसमेव ब्रह्म प्रतिपादयति" इति पाठान्तरम्.
७. एकत्र पा. (ख, घ).
८. परमस्तु पा. (ख).

व्यावृत्तिर्विशेषतो दुर्वचा ; अप्रयोजकत्वेन संग्रहेऽप्येकेनालम्, व्यावृत्तीनां [1]धर्मत्वे ताभिः प्रतिपदोपस्थापितव्यावृत्तिभेदात्सविशेषणत्वं, तद्बहुत्वादैकार्थ्यभङ्गो विशेष्यभेदप्रसङ्गश्च ; स्वरूपत्वे तु प्रयोजनभेदाभाव इत्याशङ्क्याह—**एतदुक्तम्** इति । "ब्रह्मविदाप्नोति परम" इति प्रस्तुतं ब्रह्म किमिति बुभुत्सिते कारणत्वस्य [2]तदवस्थतया स्वरूपलक्षणतो ह्यत्र तत्स्वरूपं शोध्यते । तत्र विशेषणोक्तिराम्रप्रश्ने कोविदारप्रत्युक्तिवत् स्यात्, लक्षणं च सर्वत्र व्यावृत्त्यर्थमेवेत्यभिप्रायेणाह—**लक्षणत** इति । **रूपम्** इह स्वरूपम् । निश्शेषव्यावृत्तिः प्रयोजकेन संग्रहात्सुवचेत्याह—**तद्विरोधि** इति । अत्र रूपं स्वरूपं [3]वानृतत्वादिः, ब्रह्मेतरव्याप्तधर्मो वा । **अनेन**—प्रत्येकं कृत्स्नव्युदासक्षमेण । न हि पदान्तरमेवंविधमस्तीत्यभिप्रायेण **पदत्रयोक्तिः** । एकेन पर्याप्तेऽपि प्रयोजनकार्त्स्न्यार्थमेतावद्वक्तव्यम् । आनन्दपदस्य तूपलक्षणमेतत् । **फलतः** ; विरोधिव्युदासस्य फलत्वान्नात्र स्वरूपमात्रपरत्वं विरोध इति भावः । पदानां पृथक्प्रयोजनानि व्यनक्ति—**तत्र** इति ; तस्मिन्पदत्रय इत्यर्थः । प्राकरणिकेन कारणत्वेन तुच्छव्यावृत्तौ सिद्धायां शङ्कितं विकारित्वेनानृतत्वमत्र सत्यपदेन व्युदस्तम् । **वस्तुशब्दो**ऽत्र व्यावहारिकसत्यार्थः । **अन्याधीनप्रकाशत्वं** जडशब्दार्थः । असङ्कोचात् **अनन्तपदेन** त्रिविधपरिच्छेदव्यावृत्तिरुक्ता । यदि व्यावृत्तयो भावरूपा धर्माः, तदा सत्यत्वादीन्येव स्युः ; अभावरूपा अपि तत्तुल्यचोद्या इत्यत्राह—**न च** इति । तदापि नैष्फल्यप्रसङ्गं परिजिहीर्षुराह—**अपि तु** इति । व्यावृत्तिर्हि यथा स्वत एव स्वेतरव्यावृत्तिः ; तद्वद् ब्रह्मस्वरूपमेव सकलेतर-

---

१. धर्मित्वे. पा (मु).    २. तटस्थतया. पा. (मु).
३. वानृतत्वादिकः. पा. (ख, घ).

विरोधित्वात्स्वयं सर्वव्यावृत्तिः ; भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः । भावस्याभावत्वमेकस्यानेकत्वं च कथमित्यत्र भावान्तराभावपक्षे तिष्ठन्निदर्शयति— **यथा** इति । अवधारणेन धर्मान्तरानुपलम्भं व्यनक्ति ; अन्यथानवस्थामभिप्रेत्याह—**न धर्म** इति । एवमेकस्यैव सर्वव्यावृत्तिरूपत्वे [1] व्यावृत्तेरपि पदबोध्यत्वे पदान्तरवैयर्थ्यं स्यादित्यत्र दृष्टान्तोक्तं दार्ष्टान्तिकेऽतिदिशति—**एकस्य** इति । **शौक्ल्यं कार्ष्ण्य**मित्यादिप्रतिबन्दिरिहाभिप्रेता । तत्र अनन्तपदे तावद्व्यावृत्तिबोधकत्वं सिद्धम् ; पदान्तरयोरपि तथात्वे को विरोध इति भावः । प्रतिबन्दिवाक्यमिह प्रत्यक्षानुवादित्वान्मन्दफलम् , इदं तु न तथा ; गुणपरत्वे चात्र निमित्तमात्रलाभः ; तत्परित्यागे तु [2] तात्पर्यार्थः सिद्धः । अतः **अर्थवत्तरम्** इत्युक्तम् । व्युत्पत्तिभेदं [3] प्रयोजनभेदं चाभिसन्धाय **अपर्यायत्वो**क्तिः । **पर्याय**शब्दोऽत्र भावप्रधानः । पर्यायत्वं यस्य नास्ति तदपर्यायमिति गतिः, यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति, तदपर्यायमिति वा । [4] "अपर्यायत्रम्" इति केचित्पठन्ति नात्र किञ्चिद्बाधकमित्यभिप्रायेण । अखण्डपरत्वं सहेतुकं निगमयति—**तस्मात्** इति ; तात्पर्यप्राबल्यात् शङ्कितचोद्यनिरस्ताराच्चेत्यर्थः । **एकमेव ब्रह्म** इत्यनेन विशेष्यभेदस्य प्रसङ्ग एवापास्त इत्यभिप्रेतम् । इदमपि वाक्यं नाबुद्धबोधार्थम् ; किं तु स्वतस्सिद्धपरामर्शेन कल्पितविरोध्याकारनिषेधार्थमित्यभिप्रायेण **स्वयञ्ज्योतिः** इत्याद्युक्तम् । सत्यत्वादीनामनृतत्वादीनां तद्व्याप्यस्थूलत्वादीनां तद्व्यावृत्तीनां च **निखिल**शब्देन संग्रहः । उक्तानभ्युपगमे कारणवाक्यविरोधः स्यादित्याह—**एवम्** इति । ननु "यो वेद" इत्युपास्त्यन्वयेन

---

१. "व्यावृत्तेरपि—तथा" इति पङ्क्तिः (ख, घ) कोशयोः न
२. तात्पर्यार्थस्य सिद्धिः. पा. (घ).
३. प्रयोजकभेदम् पा. (ख).
४. दपर्याय इति पा. (ख, घ).

सगुणपरत्वान्मा भूदैकार्थ्यम्; [1] तत्राह—**यतो वा** इति। कारणत्वानुवादितटस्थ-लक्षणवाक्यमिदम्। 'सदेव' इत्यादि तु तत्प्राप्त्यै लक्ष्यस्य निर्विशेषत्वव्यक्त्यै च पुनर्गृहीतम्। **जगत्कारणतयोपलक्षितस्य**; शाखयेव चन्द्रस्य दूरे स्थित्वा दर्शित-स्येत्यर्थः। कारणवाक्योक्तस्वरूपशोधकस्य तच्छेषतया तदेकार्थत्वं युक्तम्; 'यो वेद' इत्येतच्च यच्छब्दान्वितवाक्यस्थतया नोपास्तिपरमिति भावः। 'यः सर्वज्ञः सर्ववित्' इत्यारभ्य "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति कारणवा-क्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यात्; नेत्याह—**तत्र** इति। कारणशोधकवा-क्ययोरैकार्थ्यं सिद्धं मिथः कारणवाक्यानां किमुतेत्याशयः। कर्तव्ये दर्शितः शाखान्तरनयः सिद्धेऽपि समः। तेनैव सर्वेषु गुणपरत्वं किं न स्यादित्यत्रोक्तं **सजातीय** इत्यादि। अपच्छेदनीत्या हि निषेधप्राबल्यं स्थापितम्। 'परास्य शक्तिः' इति वाक्यविशेषवद्गुणपरतैव किं न स्यात्; मा भूत्तस्य शोधकवाक्य-त्वमित्यत्राह—**जगत्** इति। **अद्वितीय** इत्यादि हेतुपरम्। पूर्ववाक्ये सामान्यतः प्रस्तुतस्य व्यावृत्ततया प्रतिपित्सितस्य "तदेषाभ्युक्ता" इति प्रतिपिपादयिषित-त्वात्तस्य चाद्वितीयत्वेन तदन्यस्य गुणस्यावक्तव्यत्वादिति कारणवाक्येषु निर्गुणत्वं न कण्ठोक्तम्; अवधारणयोरन्यथाप्युपपत्तेः। **अद्वितीयत्वोक्तिस्तु** सम्राडद्वितीय इतिवत् समनिषेधार्थः स्यादित्यत्राह—**अद्वितीय** इति; अवधारणाभ्यां सजा-तीयादिनिरासौचित्यात्समनिषेधे सिद्धे परिशेषाद्बुभुत्साक्रमेणात्र गुणनिषेधः प्राप्त इति भावः। गुणपरत्वे शोधकान्तरं च विरुध्येतेत्याह—**अन्यथा** इति; निर्गुणशब्दो हि स्थूलत्वादिवत्सत्यत्वादिकमपि निषेधेदिति भावः। ननु सर्वत्र लक्षणवाक्यं स्वार्थं समर्प्यैवान्यद्व्यावर्तयति; तद्वदिहापि स्यादित्यत्राह—

---

१. अत्र. पा. (ख).

ति । चः समुच्चये ; सामानाधिकरण्यसामर्थ्यात्कारणवाक्यैकार्थ्यात् [१] शो-
यान्तरैकार्थ्याच्चेत्यर्थः । एतल्लक्षणवाक्यम् इति ; अनेन धर्मसम-
णवाक्यान्तरेभ्यो व्यावृत्तिः सूच्यते । अखण्डैकरसम् ; नित्यनिर्विशेष-
शस्वभावमित्यर्थः ।

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तु-
ोपस्थापन [२] परत्वे लक्षणा स्यात् ; नैष दोषः, अभिधानवृत्तेरपि
िवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य हि ऐक्य एव तात्पर्य-
सर्वसम्मतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी ; ततः किम् ?
तात्पर्याविरोधे सत्येकस्यापि न दृष्टा । समभिव्याहृतपदसमुदाय-
तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्यैव
ा न दोषाय । तथा च [३] शास्त्रस्थैरभ्युपगम्यते—कार्यवाक्यार्थवादिभि-
ःकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य एव
देर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते ।
ान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव [४] मुख्यार्थे
क्रियाकार्यान्वितप्रतिपादनं [५] हि लाक्षणिकमेव । अतो वाक्यतात्पर्या-
धाय सर्वपदानां लक्षणापि न दोषः । अत इदमेवार्थजातं प्रति-
यन्तो वेदान्ताः प्रमाणम् ।

---

१. शोधकान्तरैका पा (क, ख, घ) २ 'परत्वेन' पा
३. 'शास्त्रज्ञैः' पा ४ 'मुख्योऽर्थे' पा.
५. 'प्रतिपादनं लाक्षणिकम्' पा.

“ब्रह्मविदाप्नोति परम्” इत्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया विशिष्टविधितात्पर्ये सम्भवति न लक्षणा न्याय्येत्यभिप्रायेण चोदयति—

लक्षणाया दोषवपरिहार

ननु च इति। यद्यपि वाच्ये [१] विशेष्यांशो न त्यक्तः, तथापि द्वारत्यागान्न तस्य शक्तिगोचरत्वमिति भावः। अत्र वाच्यबहिर्भूते वृत्तिस्तावत् [२] नास्ति, वाच्यैकदेशे प्रधानभूते विशेष्ये वृत्तिस्तु न लक्षणा; इह जहदजहल्लक्षणा वा स्यात्। सा चात्र न दोषः; प्रत्युत विध्यनर्हवाक्यार्थज्ञानानुवादिनयान्यथासिद्धे वाक्ये विधिक्लृप्त्ययोगात्तदर्थमुख्यासम्भवे [३] लक्षणानुगुणेवेति दर्शयितुमाह—नैष दोष इति। तात्पर्यविषये शब्दस्य [४] प्राधान्यतः प्रामाण्यात्तद्विरोधे सर्वत्र मुख्यवृत्तिदौर्बल्याल्लक्षणाप्राबल्यमाह—अभिधान इति। स्वतस्सिद्धस्वरूपे कथं शब्दतात्पर्यम्; अतो गुणविवक्षा स्यादित्यत्र तद्विरुद्धे प्रागुक्तं तात्पर्यं व्यनक्ति—सामानाधिकरण्यस्य इति। स्वप्रकाशस्यापि निमित्तभेदवदनेकपदपरामृष्टस्यापि विशेष्यस्यान्यसंसर्गासहमैक्यमिह समानविभक्तिवेद्यम्; तच्च कल्पितभेदनिवृत्त्यर्थम्; प्रकृतिभिस्तु कल्पितान्याकारनिवृत्तिः प्राग्दर्शितेत्युक्तम्। सर्वसम्मतम्; त्वयापि दुस्त्यजमिति यावत्। [५] त्वदुक्तप्रक्रिययात्र तात्पर्यस्थापकाभावाल्लक्षणैव न स्यादित्यभिप्रायेण पुनश्चोदयति—ननु च इति। मुख्येन केनचिदंशेन क्वचित्तात्पर्यसिद्धावंशान्तरे ह्युपचारो दृष्ट इत्याशयः। अविरुद्धेऽन्यत्रादर्शनमकिञ्चित्करमित्यभिप्रायेण प्रतिवक्ति—ततः किम् इति। अभिप्रेतं विवृण्वन् प्रतिबन्दिं च सूचयति—वाक्य इति। एकपद-

---

१. विशेषांश पा (ङ)  २. नास्तीति. पा. (घ).
३. लक्षणानुगुण एव. पा. (ख, घ), लक्षणागुण एव. पा. (क)
४. प्रधानतः पा (ङ).  ५. त्वदीय. पा. (ङ).

[1] लक्षणाया अप्यन्यत्रादर्शनमस्ति; अतस्तस्या अपि त्यागप्रसङ्ग इति भावः। [2] तात्पर्यमुख्यार्थबाधयोरेव प्रयोजकत्वं पदैकत्वद्वित्वादेरप्रयोजकत्वं द्वित्रादिपदप्रतिबन्दिं चाभिप्रेत्याह—**समभिव्याहृत** इति। [3] एकद्व्यादिपदलक्षणावत्सर्वपदलक्षणापि "विषं भुङ्क्ष्व" इत्यत्र दृष्टेत्यभिप्रायेण **सर्वेषां वा** इत्युक्तम्। इदं हि पदद्वयं निषिद्धभोज्यं तद्भुक्तेरकर्तव्यत्वं च लक्षयति। तत्र प्रत्ययितोक्तौ युक्तायुक्तविमर्शात्तात्पर्यनिश्चयः। इह तु समानविभक्तिसामर्थ्यादबुभुत्सितबोधनानुपपत्त्या [4] चेति [5] विशेषः। [6] स्वोक्तं सर्वपरीक्षकसम्मतमित्याह—**तथा च** इति। चोऽवधारणे। यद्वा—ब्रह्म [7] प्रतिपादनप्रद्विष्टैरप्यभ्युपगतमित्युच्यते; तैरनुक्तमपि तदुक्तसामर्थ्यादभ्युपगमनीयमिति भावः। कैरियं कुत्राभ्युपगता? इत्यत्राह—**कार्य** इति। अत्र तदुक्तं विवक्षितस्य द्वारं तावदाह—**अपूर्व** इति; वृद्धव्यवहारोपक्रान्ता वेदावसाना कार्यव्युत्पत्तिरेवंप्रकारेण तैः स्थापितेत्यर्थः। अपूर्वमेव कार्यमपूर्वकार्यम्। क्रियाकार्यमुखेनापूर्वकार्यव्युत्पत्तिः। एवं तदुक्तनयेन सर्वपदलक्षणायाः फलितत्वमाह—**कार्यान्वित** इति। अयं भावः—गङ्गायां घोष इत्यादौ तु लक्ष्यस्य प्राधान्याभावात्तदन्विताभिधायिनां न लक्षणा। एवं कमलानि निमीलन्तीत्यादिषु प्रधानेऽपि निमीलने सर्वशब्दानां तत्परत्वव्युत्पत्त्यभावात्पदान्तराणां तदनुसारो न युक्तः। यद्यपि गङ्गाद्यप्रधानपदलाक्षणिकतया घोषादिपदेष्विव कमलानि निमीलन्तीत्यत्र निमीलन्ती-

---

१. लक्षणायाम्. पा (क, ख, घ).    २. तात्पर्यस्य मुख्या. पा. (घ)
३. एकद्वादि. पा. (सु).    ४. 'चेति' इति (घ) कोशे न.
५. विकल्पः. पा (सु).    ६. स्वोक्त परीक्षक पा (सु).
७. प्रतिपादनाप्रविष्टैरभ्युप. (सु), प्रतिपादनप्रविष्टैः पा (ख, घ)

न्यवान्त्र [1] प्रधानपद [2] लक्षणयापि पद्मादिपदेषु लक्षणा [3] स्यात्; तथापि लोकोपक्रमवेदावमानकार्यप्रधानव्युत्पत्तिबलादन्यान्वितमात्रे, क्रियाकार्यान्विते, कार्यमात्रान्विते वा पदान्तराणां शक्तिकल्पनानभ्युपगमात्तेषामपूर्वकार्यान्वित एव शक्तेः लौकिकवाक्येषु सर्वेषु तदभावात्सर्वपदलक्षणा स्वीकर्तव्येति। न च अन्यान्वितमात्रे पदान्तरशक्तिः; कार्यपरतयैव व्युत्पत्त्यङ्गीकारात्। नापि कार्यमात्रान्विते शक्तिः स्यात्; तथा सति लिङादेरपि कार्यमात्रे मुख्यत्वप्रसङ्गात्। न च तद्युक्तम्; अपूर्वाख्यविशेषे लिङादिशक्तेरसिद्धौ मानान्तराभावाच्च तस्याप्रमाणिकत्वापातात्। एवं कार्यमात्रान्विते शक्तानां पदान्तराणां वेदे कार्यविशेषान्वयोऽपि [4] न सिध्येत्। स्वर्गकामपदसमभिव्याहारात्सिद्धावपूर्वमपि [5] तथा सिध्येदिति न तद्वाच्यत्वादिक्लृप्तिः स्यात्। तस्माल्लौकिकवाक्येषु [6] विशिष्टापूर्वस्थायिकार्यपरत्वाभावाल्लिङादेरमुख्यार्थत्वमित्युक्तोपपत्त्या सर्वपदलक्षणाया अदोषत्वं निर्बाधत्वाभिप्रायेण निगमयति—अत इति; युक्तिबलात्परीक्षकैरभ्युपगतत्वाच्चेत्यर्थः। एवं प्रत्यक्षस्य सम्भावितदोषत्वात् शास्त्रस्य निर्दोषत्वात्तद्विरुद्धार्थत्वाच्च परमप्रकृतं शास्त्रप्राबल्यमुपसंहरति—अत इति। **इदमेव**; प्रत्यक्षादिविरुद्धमेवेत्यर्थः। भेदपरत्वेऽनुवादित्वं स्यादिति चाभिप्रेतम्। [7] **इदमर्थजातम्**—प्रमाणागोचरस्वप्रकाशनिर्विशेषसत्यत्वतदन्यमिथ्यात्वानिर्वचनीयाविद्यास्वरूपतन्मूलतिरोधानाध्यासधीनिवर्त्यत्वादिकम्।

---

१. 'प्रधान' इति (सु) कोशे न

२. लक्षणया कमला [पद्मा] दि. पा. (सु).

३. न स्यात् पा. (सु)

४. अन्वयोऽपि सिध्येत्. पा. (सु)

५. तदा. पा. (क).

६. विशिष्टापूर्वावस्थायि पा. (घ)

७ इममर्थं. पा. (सु).

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम्, विरोध एव न दृश्यते; निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य ।

शास्त्रस्य प्रत्यक्षाविरोधः पक्षान्तरमथादित्सुः शास्त्रप्राबल्यमीरितम् ।
प्रत्यक्षस्य विरुद्धत्वमन्वारुह्येति [१] भाष्यते ॥ ३४१ ॥

प्रत्यक्षादि इति । चोऽप्यर्थः । तत्त्वविद्भयो विषयविरोधाभावाद्बलीयस्त्वं न वक्तव्यमित्यभिप्रायेणाह—सति इति । चोऽवधारणे । अत्र बलाबलविचारस्य मूलमेव छिन्नमित्याह—विरोध इति । विरोधादर्शनं द्वयोरपि स्वारसिक्या परस्पराविरुद्धभेदविषयतया स्यादित्यत्राह—निर्विशेष इति ; प्रत्यक्षसिद्धं सदेव निष्कृष्य शास्त्रे ब्रह्मेत्युच्यत इति भावः ।

ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते, विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्, सत्यम्; तथैवात्र विविच्यते; कथम्? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति ; तयोर्भिन्नकालज्ञानफलत्वात् । प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात् तत्र स्वरूपं भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम् । भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः ।

---

१ भाषते पा (मु, ख, घ)

असिद्धोऽयं हेतुः, सर्वलोकोपलम्भविरोधात् इति शङ्कते—**ननु च** इति; न हि क्वचिदपि [1] अस्तिमात्रदर्शनमित्याशयः। **कथमिव**; दृष्टापह्नवमन्तरेण न कथञ्चिदित्यर्थः। **उच्यत** इति; अनेन घटादिविषयं प्रत्यक्षं सन्मात्रग्राहीति स्वोक्तिविरोधोऽपि सूचितः।

प्रत्यक्षस्य भेदाविषयत्वं सन्मात्रग्राहित्वं च

विशिष्टविषयत्वं भ्रान्तिसिद्धमिति शङ्कां विपक्षे बाधकेन वारयति—**विलक्षण** इति। लोकसिद्धं प्रसङ्गविपर्ययं भेदव्यवहारस्य प्रत्यक्षमूलत्वं चानिच्छन्प्रसक्तस्येष्टत्वमाह—**सत्यम्** इति। नानाव्यवहाराणां प्रत्यक्षमूलत्वं नापह्नोतव्यमित्यत्राह—**तथा** इति; यथा सत एकस्यैव व्यवहारः प्रत्यक्षमूलस्तथेति यावत्। एवकारस्त्वदुक्तमवधारणं स्थिरीकरोमीति सावष्टम्भत्वं व्यनक्ति। **अत्र** व्यवहारद्वये, तद्धेतौ बुद्धिद्वये वा। **विविच्यते**; सर्वेषु भ्रमेषु अधिष्ठानारोप्यव्यवहारांशयोर्यथा विभागस्तथात्रेति भावः। बाधिते दृष्टस्य विभागस्यान्यत्रोक्तावविषयवृत्तित्वं मत्वा चोदयति—**कथम्** इति। अत्र नभस्स्थलमलिनत्वादिवत्प्रत्यक्षबाधाभावेऽपि युक्त्या बाधयितुं प्रथमं मानानुपपत्तिः प्रस्तूयते। एवमत्र विकल्पा हार्दाः—किमस्तित्वघटत्वरूपयोः स्वरूपभेदयोरैक्यम्, उत भेद इति। भेदे च प्रत्यक्षमुभयम् अन्यतरद्वा गृह्णाति इति; आद्ये—युगपत् क्रमाद्वा इति; द्वितीये—स्वरूपम् भेदं वा इति। तत्रैक्यं दूषयति—**घटोऽस्ति** इति। **तद्भेदः**—तत्सम्बन्धितया ततोऽन्यत्वेनोल्लिख्य [2] मानो भेदः। अयं भावः—अत्रोल्लिख्यमानभेदाभावे भिन्नशब्दः क्वापि न स्यात्; स्वेन स्वस्य विशिष्टत्वायोगात्। अस्तिघटशब्दयोश्चापर्यायतया व्युत्पत्तेस्तद्विषयौ भिन्नौ; अन्यथा प्रतियोगि [3] सापेक्षानपेक्ष-

---

१. अस्तिमात्रादर्शनम्. पा. (सु). २ मानभेदः. पा (घ).

३ सापेक्षनिरपेक्ष. पा (सु)

व्यवहारभेदविरोधात् तत्त्वतः सिद्धयोर्व्यवहारभेदयोर्मूलभेदः [1]चिन्त्य इति। उभयग्राहित्वं निषेधति—**न च** इति। व्यवहारद्वयस्यैकमूलत्वासम्भवे युगपद्ग्रहणासम्भवहेतुमाह—**तयोः** इति। अधिकरणप्रतियोगिधीसापेक्षस्य भेदग्रहणस्य स्वरूपग्रहण [2]पश्चाद्भावित्वादित्यर्थः। क्रमेणोभयग्रहणं दूषयति—**प्रत्यक्ष** इति। **च**ः क्रमयौगपद्यायोगसमुच्चयार्थः; न हि क्षणिकं विरम्य व्याप्रियेतेति भावः। प्रत्यक्षशब्द इह अक्षजन्यत्वपरः। तेनात्मस्वरूपज्ञानात्साक्षिणश्च व्यवच्छेदः। पारिशेष्यादन्यतरग्राहित्वे तन्निर्धारणायार्थविकल्पं वक्ति—**तत्र** इति; तथा सतीत्यर्थः, तयोर्मध्य इति वा। स्वेष्टं परिशेषयति—**भेद** इति। **स्मरणशब्दः** क्वचिद्ग्रहणस्याप्युपलक्षकः। **एवकारः** पूर्वमैक्ययौगपद्यासम्भवोक्तौ प्रतियोगिसापेक्षत्वस्य [3]गर्भितत्वं व्यनक्ति। शास्त्रविरोध [4]असम्भवमाह—**न भेद** इति। अयं भावः—एकेन प्रत्यक्षेण स्वरूपे गृहीते यदि प्रत्यक्षान्तरेण भेदग्रहणमित्युच्यते; तदा निराधारभेदग्रहणायोगात्पूर्ववदुत्तरमपि स्वरूपं गृहीत्वा नश्येत्। अतो न कदापि प्रत्यक्षजातीयेन भेदसिद्धिरिति। तदिदमनूदितं संवित्सिद्धौ—

"यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः।
ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः" ॥ इति।

"व्यवच्छेदविधानयोः"; * स्वरूपग्रहभेदग्रहयोरित्यर्थः। तथापि दुरपह्नवव्यवहारान्यथानुपपत्त्या कथंचित् प्रत्यक्षेण भेदग्रहः कल्प्य इत्यत्राह—**अत** इति।

---

१. चिन्त्यते पा (क).  २ पश्चाद्भावितत्वात् पा (घ)
३ गर्हितत्वम् पा (सु)  ४ असम्भवादाह पा (सु)
* टि—अत्र यथासंख्यमविवक्षितम्

उक्तयुक्तिबलादर्थापत्तिरियमन्यथैवोपपाद्या ; अनुपपन्नतैकवेषायां भ्रान्तौ तु क्रमयौगपद्यादिविमर्शो न कार्य इति भावः ॥

किं च भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न [१]वस्तुस्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च वाच्यं स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य [२]प्रतियोगिस्मरणसव्यपेक्षत्वात्तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति ; स्वरूपमात्रभेदवादिनो हि [३]प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। 'हस्तः करः' इतिवद् 'घटो भिन्नः' इति पर्यायत्वं च स्यात्। नापि धर्मः—धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः ; अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। किं च [४]जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणम् ; भेदग्रहणे सति [५]जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो [६]भेदस्य दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्।

मेयानुपपत्तिमाह—**किं च** इति। प्रसिद्धेऽपि बाधकन्यायान्यायविव-

---

१. वस्तुन. स्वरूपम्. पा.
२ प्रतियोगिसव्यपेक्ष पा.
३. प्रतियोग्यपेक्षा नोत्प्रे पा
४ जात्यादिविशिष्ट पा
५. जात्यादिविशिष्ट. पा
६ भेदस्यापि पा

ा न्यायविद्भिरित्युक्तम्। भेदः—स्वरूपं धर्मो वा इति हार्दे विकल्पे पूर्वं

भेदस्य दुर्निरूपत्वम् निरस्यति—भेदस्तावत् इति। संशयाद्यनुपपत्तिगर्भं हेतुमाह—वस्तु इति। स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः? तदभावे कथन्तरां शयविपर्ययौ? तयोरभावे च सर्वेभ्यो भेदव्यवहार एव स्यात्; तथा च [1] न धकसाध्यं किञ्चित्स्यादिति भावः। प्रसञ्जितविपर्ययस्यान्यप्रयुक्तत्वमाशङ्क्याह—च इति। स्वरूपे गृहीतेऽपि; स्वरूपभूते भेदे गृहीतेऽपीत्यर्थः। भिन्न त्यादि। यथा वाच्यस्वरूपे गृहीतेऽपि वाचकप्रयोगः सम्बन्धग्रहणापेक्षः, था 'भिन्नः' इति व्यवहारोऽपि प्रतियोगिधीसापेक्षः; तत एवात्रासौ तद्भावप्र-क्तः [2] स्वाभाव इत्याशयः। *प्रतियोगिसापेक्षत्वात् इत्युक्तं दूषयति—स्व-पमात्र इति। चः अवधारणे, आश्रयापेक्षासमुच्चये वा। यथा स्वरूपग्रहणे प्रतियोगिग्रहणनैरपेक्ष्यम्, तथा तद्व्यवहार इत्यभिप्रायेण नोत्प्रेक्षितुं क्षमा-त्युक्तम्। स्वरूपमात्रभेदवादिन इत्यनेन सूचितं हेतुं विवृणोति—स्वरूप-भेदयोः इति। उक्तं प्रतिबन्दिगर्भं व्यनक्ति—यथा इति। सहप्रयोगभङ्गम-भेप्रयन् प्रसङ्गान्तरमाह—हस्त इति। स्वरूपभेदशब्दयोः पर्यायता स्यादिति क्तव्ये घटो भिन्नः इत्युक्तेरयं भावः—भेदत्वेन प्रस्तुतस्य घटस्य स्वरू-त्वं परे मन्यन्ते; तस्य च स्वरूपमेव भेदश्चेत् यस्य भेदोऽस्ति, स भिन्नः; अतो घटभिन्नशब्दौ पर्यायौ स्याताम्। एवं घटभेदशब्दावपीति। चका-रोऽत्रानुक्तमपि समुच्चिनोति। स्वरूपस्यानुवृत्तत्वे भेदत्वं न स्यात्, व्यावृत्त-

---

१. 'न' इति (घ) कोशे न. २. स्वभाव पा (सु).

टि—'प्रतियोगिसापेक्षत्वात्' इत्ययम् 'प्रतियोगिस्मरणसव्यपेक्षत्वात्' इति मूलग्रन्थस्यार्थानुवाद।

३. प्रतियोगिनैरपेक्ष्यम्. (सु, ख, घ)

त्वेऽन्येषां निस्स्वरूपत्व [१] निर्भेदत्वापत्तिरित्यादि। भेदस्य धर्मत्वे तद्वति क्वचिदप्यभेदो न सिध्येत्। तथा सति अभिन्नस्य भिन्नस्य वाभावे सर्वापह्नवः स्यादित्यभिप्रायेणाह—**नापि** इति। अनवस्थां वक्तुं धर्मभूतो भेदः स्वरूपेणाभिन्नः भिन्नो वा इति विकल्प्याद्यं निरस्यति—**धर्मत्व** इति। भेदाभावे धर्मधर्मिभावो न स्यात्, स्वरूपपक्षोक्तदोषाश्च स्युरित्यभिप्रायेणाह—**अन्यथा** इति। द्वितीये मूलोच्छेदमाह—**भेदे च** इति। **तद्धर्मः**—तस्य भेदस्य धर्मः। ग्रहणद्वारापि दोषमाह—**किं च** इति। तज्जातीयत्वातज्जातीयत्वतद्गुणकत्वातद्गुणकत्वविशेषणत्वविशेष्यत्वधर्मत्वप्रतियागित्वादावपि भेदग्रहेऽपि [२]अन्योन्याश्रयमभिप्रेत्य जात्याद्युक्तिः॥

भेदकाग्रहणे भेदो न गृह्येत कथञ्चन।
तस्य चाग्रहणे सोऽपि न गृह्येतेति संग्रहः॥ ३४२॥

एवं ग्राह्यानुपपत्त्या ग्राहकानुपपत्तिं पूर्वमुक्तां द्रढयति—**अत** इति।

किं च 'घटोऽस्ति, पटोऽस्ति' 'घटोऽनुभूयते, पटोऽनुभूयते' इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते; अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्; यथा—रज्जुरधिष्ठानतयानुवर्तमाना [३] परमार्थसती, व्यावर्तमानाः सर्पभूदलनाम्बुधा-

---

१ निर्भेदत्वाद्यापत्ति.. पा (सु) २. अन्योन्याश्रयत्वम् पा. (सु).

३ 'परमार्था सती' 'सती परमार्था' इति च पा.

रादयोऽपरमार्थाः । ननु च रज्जुसर्पादौ 'रज्जुरियं, न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठान [1] याथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यं, न व्यावर्तमानत्वात्; रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया ; किं तु अबाधितत्वात् ; अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम् ? उच्यते—घटादौ दृष्टा व्यावृत्तिः। सा किंरूपेति विवेचनीयम् ; किं 'घटोऽस्ति' इत्यत्र पटाद्यभावः ? सिद्धं तर्हि 'घटोऽस्ति' इत्यनेन पटादीनां बाधितत्वम् । अतो बाधफलभूता विपर्यनिवृत्तिर्व्यावृत्तिः । सा व्यावर्तमानानामपारमार्थ्यं साधयति । रज्जुवत्सन्मात्रमबाधितमनुवर्तते । तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थः । प्रयोगश्च भवति—सत् [2] परमार्थः, अनुवर्तमानत्वात्—रज्जुसर्पादौ रज्ज्वादिवत् ; घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्—रज्ज्वाद्यधिष्ठानसर्पादिवदिति ।

न केवलं प्रमाणाभावः; प्रमाणबाधोऽप्यस्तीत्याह—किं च इति । अत्र घटादिबाधे तत्सत्तापि खपुष्पगन्धवत्स्यादिति शङ्कानिरासायानुवृत्तसत्त्वस्थापनम् ।

सन्मात्रस्य परमार्थत्वम्

[3] विवक्षितानुमानद्वयस्य पक्षसिद्धिं तावदाह—घटोऽस्ति इति। अनुभूत्यनुवृत्ति [4] प्रदर्शनं सदनुभूत्यैक्याधानार्थम् ; न हि व्यावृत्तस्यानुवृत्ततादात्म्यं स्यात्। स्वरूपासिद्धिं व्याप्यत्वासिद्धिं च व्युदस्यति—अत्र इति । रज्जुसर्पादि इत्युदाहरणे व्याप्तिद्वयार्थमादिशब्दः प्रत्येकं भाव्यः। व्याप्तिदृष्टान्तौ स्पष्टयति—यथा इति । परमार्थसती—व्यावहारिकव्यवस्थयेति शेषः । सर्पाद्युदा-

---

[1] 'याथात्म्य' इति पा.  [2] 'परमार्थम्' इति पा.

[3]. विवक्षितस्य पा. (सु).  [4]. वृत्तिदर्शनम् पा. (सु).

...निर्ह्...धिष्ठानाध्यस्तविषयम्। द्वयोरपि व्याप्त्योः [1] उपाधिं शङ्कते–**ननु च** इति। अबाधितत्वोपाधिः पक्षव्यापक इति न वाच्यम्; माध्यमिकनयेन घटादितुल्यन्यायतया सतोऽपि [2] बाधस्य सुवचत्वादिति भावः। बाधितत्वोपाधेः पक्षव्यावृत्तिमाह—**अत्र तु** इति; 'घटोऽस्ति' इत्यादावित्यर्थः। द्वयोरपि साधनव्यापकत्वबुद्ध्या प्रतिवक्ति—**उच्यते** इति। बाधितत्वस्य तावदाह—**घटादौ** इति। **किंरूपा**–किं सत्यसर्पनिवृत्तिवद्भ्रान्तिसिद्धा? उत रज्जुसर्पनिवृत्तिवत्प्रमाणबाधसाध्या? इति विकल्पः। तत्र आद्यो घटपटतादात्म्यादिप्रसङ्गादयुक्त इत्यभिप्रायेणाह–**किम्** इति। 'घटोऽस्ति' इति प्रतीतेऽर्थे पटाभावो मिथ्या; अतः प्रमितयान्यव्यावृत्त्यान्येषां बाधितत्वमर्थसिद्धमित्याह—**सिद्धम्** इति। **घटोऽस्ति** इत्यनेन 'न रजतम्' इति निषेधाभावेऽपि यथा 'शुक्तिः' इत्यनेन रजतबाधस्तथेति भावः। एवं पटादिविधौ घटस्यापि निवृत्तिः सिद्धा स्यात्। उक्तप्रकारेणोपाधेः साधनव्यापकत्वमाह--**अत** इति। **बाधफलभूता**; 'नास्ति' इतिधीस्थाप्येत्यर्थः। **विषयनिवृत्तिः**—घटादिधीवेद्यानामभावः, तेषामिह वेद्यत्वाभावो वा। एवं निरुपाधिकतया व्यावर्तमानत्वस्य साधकत्वमाह—**मा** इति। अनुवर्तमानत्वहेतावप्यबाधितत्वोपाधिर्व्यापक इत्याह—**रज्जुवत्** इति। सतोऽपि माध्यमिकयुक्त्या बाधोक्तिर्निरधिष्ठानभ्रमासम्भवादयुक्ता। हेतुद्वयफलितमाह—**तस्मात्** इति। मिथो विमर्देन सर्पादिनिवृत्तौ रज्ज्वनिवृत्तिवत् घटादिनिवृत्तौ "सदेव" इति श्रुतं सत् परिशिष्येतेत्याशयः। भेदबाधकतर्काणामनुग्राह्यनिष्कर्षायाह—**प्रयोगश्च** इति। चकार उपाधिविधूननादिसमुच्चयार्थः।

---

१. उपाधी. पा (सु).  २ बाधकम्य. पा (ख, घ, सु)

एवं [1] सत्यनुवर्तमानानुभूतिरेव परमार्थः; सैव सती। ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्; नैवम्—भेदो हि प्रत्यक्षाविषयत्वाद् दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाण [2] पदवीमनुसरति। तस्मात् सत् अनुभूतिरेव।

चिन्मात्रसत्यत्वमिच्छतां किं बाह्यस्य सतः सत्यतयेत्यत्राह—एवं सति इति; हेत्वोः निरुपाधिकत्वे [3] सिद्धे सतीत्यर्थः। एवकारः पूर्वोक्तरीत्यानुभाव्यानां मिथ्यात्वं व्यनक्ति। सत्यद्वित्वं, भेदसत्यत्वस्वीकारः, मिथो व्यावृत्त्या द्वयोरपि बाधश्च स्यादित्यत्राह—सैव सती इति; अनुभूतिरेव सच्छब्दार्थ इत्यर्थः। अवधारणमयुक्तम्; सतः प्रत्यक्षविषयत्वसाधनेन [4] भेदोक्तेः इत्यभिप्रायेण चोदयति—ननु च इति। मानतः स्वरूपतश्च भेदस्यानुपपन्नत्वोक्त्या [5] धीसद्भेदोऽपि बाधित इति प्रतिवक्ति—नैवम् इति। तर्हि स्वयमेव सामान्यतो विशेषतश्च विषयत्वादिभेदोक्त्या विरोध इत्यत्राह—अत इति। भ्रान्तिरूपलोकदृष्ट्या मयोक्तमित्यभिप्रायेण [6] प्रमाणपदनिषेधः। [7] एतेन दृग्दृश्यसम्बन्धानुपपत्तिः सूचिता। यां "ग्राह्यलक्षणो योगशब्दः" इति योगाचारा उपचरन्ति, सैवेत्यवधारितं निगमयति—तस्मात् इति; विषयविषयित्वरूपस्यापि भेदस्य बाधादित्यर्थः। सदनुभूतिरेव—सदिति भातं [8] वस्तु न तद्बुद्धेर्भिन्नम्।

सत एव अनुभूतित्वम्

---

१. 'च सति' इति पा

२ 'प्रमाणपद' इति. पा तत्त्वटीकानुसारेण

३ 'सिद्धे' इति (सु) कोशे न

४. भेदस्य सिद्धत्वात् पा. (सु).

५ धी [स्वभावोऽपि] सद्भेदोऽपि. पा (सु)

६ प्रमाणपदवी पा (सु)

७ तेन वा (सु).

८ वस्तुनस्तद्बुद्धे पा. (ख, घ)

सा च स्वतस्सिद्धा, अनुभूतित्वात्; अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किं च [1] अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्; सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते; येन परायत्तप्रकाशाभ्युपगम्येत।

सच्चिदात्मनो मेयत्वाभावे माध्यमिकोक्तसंवृतिसिद्धिवत्स्यादित्यत्राह—सा इति। स्वतस्सिद्धा—स्वरूपप्रयुक्तस्वप्रकाशा; अवेद्यत्वे सति अपरोक्षव्यवहारार्हेत्यर्थः। अत्र,

अनुभूते स्वतस्सिद्धत्वम्

* "यानुभूतिरजानन्तामेयाद्यानन्दविग्रहा।
महदादिजगन्मायाचित्र [2] भित्तिं नमामि ताम्॥"

इत्युक्तक्रमेण उपरितन उपन्यासः। "येति स्वतस्सिद्धतां सूचयति" इति व्याख्यातम्। तत्रानुभूतिरिति हेतुगर्भमित्याह–अनुभूतित्वात् इति; चित्त्वादित्यर्थः। असाधारणाभासत्वशङ्कां व्यतिरेकव्याप्त्या परिहरन् "अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः" इति तत्रोक्तमाह—अन्यत इति। अनुमानान्तर [3] मप्यस्तीत्याह–किं च इति। अनुभवेत्यादिः प्रतिज्ञाग्रन्थः; अनुभूति-

---

१ 'अनुभवान्तरापेक्षा' इति पा

टि—"यानुभूतिरजामेयानन्तात्मानन्दविग्रहा।
महदादिजगन्मायाचित्रभित्तिं नमामि ताम्"॥

इति पाठ उपलभ्यमानेषु इष्टसिद्धिकोशेषु दृश्यते

२. भित्ति.. पा. (छु, घ)    ३. मस्तीत्या. पा (छु).

नानुभवान्तरसापेक्षप्रकाशेत्यर्थः। 'भासमानत्वादिभिर्वेद्या' इति प्रत्यनुमानं चानेन निरस्यते। अत एव चकारः कल्पयितुमिति पदं च सफलं स्यात्। प्रतिज्ञायां हेतुं वदन् प्रत्यनुमाने चोपाधिं व्यनक्ति–सत्तयैव इति; [1]यावत्सत्तं प्रकाशमानत्वादिति यावत्। विद्यमानत्वेऽप्यविदितावस्थायोगित्वं घटादिषु वेद्यत्वस्योपाधिभूतम्; तन्नेति भावः। हेतोरसिद्धिमुपाधेस्साधनव्यापकत्वं च निरस्यति–न हि इति।

अथैवं मनुषे–उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयते' इति; न हि कश्चिद् 'घटोऽयम्' इति जानंस्तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति। तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसंनिकर्षवदनुभूतेः सद्भाव एव हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते। एवं तर्हि अनुभूतेरजडाया अर्थवज्जडत्वम् [2]आपद्यत इति चेत्; किमिदमजडत्वं नाम? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्सम्भवात्। न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते। अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं [3]स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति।

---

१. यावत्सत्त्वम् पा (क, ख, घ)

२. 'आपद्येत' इति पा.

३ 'स्पृशतोऽपि' इति पा.

अनुभूतेरनुमेयत्वशङ्का

तदुभयं भाट्टमतेन शङ्कते—अथ इति। **विषयमात्रम्** [१] घटादिमात्रम्; न तु तद्धीरित्यर्थः। तदिदं व्यक्तमनूक्तं संवित्सिद्धौ—

"घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते।
न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते॥" इति॥

विषयमात्रभाने हेतुमाह—**घट** इति। घटस्यानुभूतिकर्मत्वात् [२] धियः स्वकर्मत्वविरोधात्तदानीं न [३] भानमिति भावः। यद्वा प्रतिषेधार्थोऽयमनुवादः। **घटोऽनुभूयत इति न ह्यनुभवती**त्युत्तरत्रान्वेति; 'घटोऽयम्' इति ज्ञानं यदा जायते, न तदानीं घटः [४] **अनुभूयते** इत्यनुभवः। घटानुभूतेर्घटशब्देदं[५]शब्दार्थान्यत्वादित्यर्थः। घटोक्तेः प्रदर्शनार्थत्वज्ञापनाय **अविषयभूताम्** इत्युक्तम्। **अनिदम्भावाम्**; घटस्य देशविशेषसान्निध्यमिहेदम्भावः; तद्रहितामिति यावत्। ननु आलोकलिङ्गा [६] दीनामज्ञातानां न भासकत्वं दृष्टम्; तथात्रापि स्यात्। अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गश्च। आह च कीर्त्तिः—"अप्रत्यक्षोपलम्भस्य [७] नार्थदृष्टिः प्रसिध्यति" इति; तत्राह—**तस्मात्** इति; हेतुतयोपाधिनिवृत्तितया च विवक्षितस्य यावत्सत्त्वं प्रकाशमानत्वस्य निरस्तत्वादित्यर्थः। ज्ञापकानां ज्ञातृत्वमिन्द्रियादिषु न दृष्टम्; स्वस्य ज्ञानोत्पत्त्या स्वपरवेद्यवैषम्यमित्यवधारणाभिप्रायः। यदि वर्तमानदशायां धीः स्वयं नानुभूयेत, तदा 'अनुभूयते' इति वर्तमानाव-

---

१ 'घटादिमात्रम्' इति (ख, घ) कोशयो न दृश्यते
२ धीस्वकर्म. पा. (क, ख, घ). ३ भातम् पा. (मु)
४ अनुभूत पा (क, ख, घ) ५. शब्दान्यत्वात्. पा (मु)
६ दीनां त्वज्ञातानाम् पा (मु) ७. नार्थ दृष्टिः पा. (मु)

भासः कथं स्यात्? उत्तरक्षणे च निवृत्ता कथं गृह्येत? ज्ञानग्राहकाभावे ज्ञेयस्यापि निष्प्रमाणकत्वात्सर्वासिद्धिरित्यत्राह—**तदनन्तरम्** इति। अत्यन्तासन्नत्वादनुभूयत इति वर्तमानोक्तिः; व्याप्तिस्मरणादिकं च संस्कारभूम्ना शीघ्रं भवति; कालभेदाग्रहोऽपि पद्मपत्रशतवेधन्यायादविरुद्ध इति भावः। 'घटः प्रकाशते' इति विषयसामानाधिकरण्यादर्थगतत्वोक्तिः। आत्मगता धीरितरविषयस्य [1]प्रकाशिकेति शङ्का च तेन व्युदस्ता। वेद्यगतप्रकाशस्य **कादाचित्कत्वोक्त्या** तत्कारणत्वेन धीरनुमेयेति बोध्यते। अर्थगतत्वे रूपादिवत्पुरुषविशेषविषयत्वं न स्यादिति शङ्कानिरासाय **प्रकाश**शब्दः। अर्थप्रकाशो हि पुरुषविशेषधीजन्यतया तत्प्रतियोगितयैव स्वतः परतो वा कुतश्चिद्ज्ञातत्वात्तद्गतज्ञानानुमापक इति भावः। अर्थगतप्रकाशो वायु[2] रूपादिवत् योग्यानुपलब्धिनिरस्त इत्यत्र विषयस्वरूपात्तद्धर्मान्तरेभ्यश्च व्यावृत्ततयोपलब्धम् **अतिशय**शब्देन व्यनक्ति। अत्र '**अन्यतरसिद्धौ**' इत्यादिभिः प्रागुक्तं स्मारयन्मृषावादी चोदयति—**एवं तर्हि** इति; स्वेतराधीनसिद्धित्वे सतीत्यर्थः। स्वमतेन [3] श्रुत्यनुमाभ्यां सिद्धवत्कारात् **अजडायाः** इत्युक्तम्। प्रसङ्गदोषान्विवक्षुः प्राकट्यवादिप्रसञ्जनीयविपर्ययं विकल्पयति—**किमिदम्** इति। [4] किं हेतुत्वेन उपाधिविपर्ययत्वेन चोक्तं यावत्सत्त्वं भासमानत्वम् [5] उत साध्यत्वेनोक्तं स्वतस्सिद्धत्वमिति विकल्पः। अत्राद्यं दूषयति—**न तावत्** इति। वेद्यत्वे यावत्सत्त्वं प्रकाशमानत्वाभाव इति प्रसङ्गार्थः स्यात्; सोऽस्मदिष्टः; विपर्यये पर्यवसानं च न सम्भवतीति भावः।

---

१ प्रकाश इति. पा. (क, ख, घ) २ रूपादियोग्या पा. (ख)

३ श्रुत्यनुमानाभ्याम् पा (ख). ४ किमिति पा. (ख)

५ भासमानत्वं साध्यत्वेन चोक्तमुत. पा (ख).

[1] मूलशैथिल्यमप्याह—**सुखादिषु** इति। यद्यपि अस्माकं [2] सुखादेरुत्पत्ति [3] क्षणात्पश्चाज्ज्ञानान्तरेण ग्रहणम्; सिद्धान्तिनस्तु धीविशेषत्वेन स्वतस्सिद्धत्वम्; तथापि त्वत्पक्षे चैतन्योपरञ्जितान्तःकरणविवर्ततयाध्यस्तत्वेन शुक्तिरूप्यवदप्रकाशमानक्षणक्लृप्त्ययोगात्सुखादौ व्याप्तिभङ्गः सिद्ध इत्यभिप्रायेण विवृणोति—**न हि** इति। अन्ततस्त्वन्मते प्रातिभासिकरजतादिः साक्षिचैतन्येन यावत्सत्त्वं प्रकाशमाना अविद्यादयश्चादिशब्दार्थः। बुद्धेर्यावत्सत्त्वं प्रकाशमानत्वमिच्छतः सुखादावपि तद्वत्स्वरसदृष्ट्या तथा किं न स्यादिति कल्पयित्वा वा तदुक्तिः। [4] द्वितीयेऽपि तु अवेद्यत्वे स्वयम्प्रकाशत्वाभावः स्यादिति प्रसङ्गार्थः। [5] तथापीष्टप्रसङ्गो विपर्ययापर्यवसानं चेत्याह—**अत** इति; [6] आद्यकोटिनिरासादन्या शिष्यते; सापि नास्तीत्यर्थः; प्रकाशाव्यभिचारस्य हेतोरसिद्धेरनैकान्त्याच्चेति वा। अनुभूतित्वहेतुना तत्सिद्धिः स्यादित्यत्राप्रसिद्धसाध्यतया व्याप्तिग्रहणाभावे केवलव्यतिरेकिणोऽनुमानत्वमेव नास्तीत्यभिप्रायेण साध्यरूपे व्याहतिमाह—**अर्थान्तरम्** इति। स्वयम्प्रकाशत्वाभावः स्यादिति तर्केऽपि प्रतियोग्यसिद्धेस्तदभावप्रसङ्गोऽशक्यः।

स्वप्रकाशत्वविषयाः श्रुतयः स्मृतयश्च नः।
स्वधर्मभूतबुद्ध्यैव पुंसो भानं प्रचक्षते ॥ ३४३ ॥

कर्मकर्तृविरोधादङ्गुल्यग्रस्य स्वात्मस्पर्शविरोधः, इह तु न तथेति चेत्;

---

१. मूलशैथिल्यमाह. पा. (क, ख) २. 'सुखादेः' इति (मु) कोशे न.
३ उत्पत्तिलक्षणात्. पा. (क, ख, घ). ४. 'अपि' इति (मु) कोशे न
५ तदापी. पा. (ख, घ) ६ 'अत्र' इति पदम् (मु) कोश एव दृश्यते.

इहापि गमनगन्त [1]व्यादिवत्क्रियाकर्मत्वविरोधः सिद्धः । इति: शङ्कासमाप्तौ ।

तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् ; अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः ; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते , नापि ज्ञानान्तरसिद्धा ; अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति । प्रयोगश्च—अनुभुतिरनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् । यः स्वसम्बन्धादर्थान्तरे [2]यद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः ; यथा रूपादिश्चाक्षुषत्वादौ ; रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाचाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ । अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ।

अवेद्यत्ववादी प्राकट्यवादिनमुपालभते—तदिदम् इति ; बुद्धेः स्वप्रकाशत्वे सिद्धे निराकारप्रकाशायोगादाकारद्वयानुपलम्भाच्च ग्राह्यग्राहकयोर्ज्ञानाकारत्वं वदद्भ्यो भीतैः प्रकाशमानस्य नीलादेः [3]अप्रकाशमानबुद्ध्याकारत्वायोगात्कल्पितमिदं दृष्टहानमदृष्टकल्पनं च सर्वं प्रत्यक्षविरुद्धमिति भावः । अनुभवस्य विभव आलोकादिनीत्या परप्रकाशादिहेतोः स्वप्रकाशादौ सजातीयनैरपेक्ष्यम् । तत्र [4]श्रुत्यानुमितिसूचनाय स्वमतिवि-

अनुभूतेः स्वप्रकाशत्व

---

१. गन्तव्यत्वादि पा. (सु).
२ 'तद्धर्म' पा
३. अप्रकाशबुद्ध्या. पा. (सु).
४ श्रु[त्या]तानुमिति. पा (सु).

जृम्भितम्–इत्युक्तम् । किं प्राकट्यं रूपादिवद् दृष्टम्; उत गुरुत्वादिवत्कल्प्यम्? इति हार्दे विकल्पे पूर्वं दूषयति—**अनुभूति** इति । धीरेव विषयस्य प्रकाशः । सा चातन्निष्ठापि भ्रान्त्या विषयस्थेव भाति । वस्तुतः प्रकाशस्य विषयधर्मत्वे यद्यसावप्रत्यक्षः, तदा हि लिङ्गानुपलम्भात् [1] नानुमितिः। अतः प्रत्यक्षत्वेऽङ्गीकृते तदुपलम्भः पुरुषविशेषनियतो न स्यादित्यभिप्रायेण **रूपादिवत्** इत्युक्तम् । द्वित्वादिवद्धीजन्यतया तेनैव दृश्यत इति चेन्न; अपेक्षाबुद्धिवेद्याकारविशेषातिरिक्तद्वित्वादिक्लृप्तौ गौरवात् । यादृश्या बुद्ध्या द्वित्वाद्युत्पत्तिं मन्यसे, तादृश्या तद्व्यवहारः स्यात्; [2] स चातीतादिष्वप्यस्ति; न च तत्र [3] द्वित्वाद्युत्पत्तिः; [4] निराधारधर्मजननायोगात् । अतिरिक्त [5] द्वित्वाद्युत्पत्तिपक्षेऽपि अनन्यथासिद्धप्रत्यक्षबलात्प्रकाशप्रतिनियमः; इह तु न तथा, वेद्यगतस्य वित्त्यतिरिक्तस्यानुपलम्भादिति भावः । ये तु "वर्तमानेष्वतीतादिषु च द्वित्वादिकमेकत्ववत्स्वत एव तत्तद्वस्तुनिष्ठमपेक्षाबुद्ध्या गृह्यते; न तु जन्यते । इदमेव प्रतिपुरुषमपेक्षाबुद्धिभिरनन्तद्वित्वादिकल्पनाद्वरम्" इत्याहुः; तत्पक्षग्रहे च नेदं निदर्शनं शोभते। द्वितीयं निरस्यति—**उभय** इति । कल्पनागौरवभीतैः [6] धियं त्यक्त्वा विषयस्थप्रकाश एव स्वीक्रियतां, धीसामग्र्या च [7] तत्सिद्धिः स्यादित चोद्यं तु सर्वविरुद्धं चेत्यभिप्रायेण **उभयाभ्युपेतत्वोक्तिः**। एवकारेण [8] क्लृप्त्युपपत्तीनामन्यथासिद्धिर्गौरवं च व्यज्यते । **अशेषशब्दः**

---

१. नानुमित. पा (क. ख,)
२. सा च पा. (क, ख)
३ द्वित्वाद्युपपत्तिः. पा. (घ)
४. निराधारजन्मता. पा. (सु)
५. द्वित्वाद्युपपत्ति पा (क)
६ धीद्वयम् . पा (सु), द्वयम् पा (ख, घ).
७. न तत्सिद्धिः. पा. (घ).
८. क्लृप्त्युस. पा. (ख, घ). क्लृप्त्युक्तहेतूपपत्तीनाम् . (सु)

कल्पकत्वेन शङ्कितानां कात्स्न्यर्माह ; तत्र सर्वत्र प्राकट्यजनकतया स्वीकृतैव धीरेका हेतुरिति चावधारणाभिप्रायः ।

यदि कल्प्येत विषये प्राकट्यं व्यवहारतः ।
तद्धेतुत्वेन कल्प्या धीस्तत्फलार्थं प्रकल्प्यताम् ॥ ३४४ ॥

यथा तत्रैव तस्यैव प्राकट्यं ते धिया भवेत् ।
तथा भानादयोऽपि स्युः किमन्तर्गड्डुकॢप्तितः ॥ ३४५ ॥

प्राकट्यं [1] प्रकटं [2] स्याद्धः परतः स्वत एव वा ।
आद्येऽनवस्थितिश्शेषे बुद्धिरेव तथा न किम् ॥ ३४६ ॥

'ज्ञातः' इत्यादिव्यवहारस्तु इष्टद्विष्टादिनयात्कर्मप्रत्ययाधीनः। तद्रहितोऽपि प्रकटो घट [3] इत्यादिधीकर्मत्वविषयतया तद्व्युत्पत्तेः स्यात् । ज्ञानकर्मणो घटस्य 'प्रकाशते' इति कर्तृत्वेन व्यवहारोऽपि 'रोचते, स्वदते' इत्यादिवद्धातुविशेषायत्तः । अतिरिक्तकॢप्तौ च गुणक्रियादिषु प्राकट्ये च प्रकटादिव्यवहारो दुर्निर्वहः । एवं भूतभाविषु च । तदुक्तं संवित्सिद्धौ—

"अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः ।
न हि धर्मिण्यसत्येव धर्मस्सम्भव [4] मृच्छति ॥" इति ।

अत्र परोक्तप्रतिबन्दिनिस्तारस्तु—

---

१. प्राकटम्. पा (सु) २. स्याद्धा. पा. (सु)
३. इत्यादिर्धी पा. (सु) ४ मिच्छति (क, घ).

नश्यद्दशाकसंयोगो नानाधारः प्रतीयते ।
प्रध्वंसस्तु निराधारोऽसद्वाधार [1]इतीरितः ॥ ३४७ ॥

एतेन "अतीतादौ विषयत्वमात्रं न कर्मत्वम्; यत्र तु कर्मत्वं तत्र क्रियाजन्यफलभागित्वमवश्यापेक्षितम्" इति निरस्तम्; गुणादौ कर्मत्वेऽपि तदसम्भवात्। ज्ञानं स्वकर्मणि किञ्चित्करोति, क्रियात्वादित्यनुमितौ च धात्वर्थमात्रत्वे हेतौ [2] न व्याप्तिः। स्पन्दत्वे तु असिद्धिः। आहुः * न्यायनिष्ठाः—

"अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके"॥ इति।

ननु धीस्वरूपातिरिक्तं तद्विषयत्वमर्थे भाति; तदनभ्युपगमे विरोधः; तदेव प्राकट्यमिति शङ्कायां निगमनव्याजेनोत्तरमाह—अत इति; त्वदिष्टस्य लिङ्गस्य [3] निष्प्रमाणत्वादित्यर्थः। विषयत्वं च विषयिणमन्तरेण न भायात्; तद्भाने तु अनुमेयं नावशिष्यत इत्याशयः। मा भूदनुमेयत्वम्; मानसप्रत्यक्षत्वं तु स्यात्; क्षणिकात्मविशेषगुणत्वात्सुखादिवदिति, तत्राह—नापि इति। अनुपलब्धेः कल्पनायोगाच्चेत्युभयमनुषञ्जनीयम्। न हि स्वस्मिन्वर्तमानं ज्ञानं [4] ज्ञानान्तरसिद्धमिति प्रत्यक्षयामः; उक्तो हेतुरपि क्षणिकत्वात्मधर्मत्वगुणत्वानामस्माभिरनभ्युपगमान्निरस्तः। मानसप्रत्यक्षत्वे च सुखादिवदात्मगुणस्य सतो

---

१. 'ईरितः' इति पदं (क, ख, घ). कोशेषु नोपलभ्यते   २. नाव्याप्तिः. पा. (मु).
* टि—न्यायनिष्ठाः उदयनाचार्याः.
३. अप्रमाणत्वात्. पा (घ)   ४ ज्ञानान्तरमिति. पा (मु).

बुभुत्सितग्राह्यतया तद्ग्रहणस्यापि तथेत्यनवस्था स्यात् । बुभुत्सितग्राह्यत्वे तु ज्ञाते बुभुत्सा, ततश्चापाततोऽपि तद्धीरित्यन्योन्याश्रयः। तत्रापि सुखादेरिव मानसप्रत्यक्षतयैव ज्ञानस्यापि ज्ञातत्वनियमे बुभुत्सातज्ज्ञानादिपरम्परानुच्छेदः । अनियमे तु क्षणिकात्मविशेषगुणत्वं मानसप्रत्यक्षत्वरहिते ज्ञाने वर्तत इत्यनैकान्त्यम्, तस्यापि पक्षीकारे बाधः। किं च ज्ञानगोचरज्ञानस्य प्रमितत्वे पूर्वज्ञानमपि निष्प्रमाणकं स्यात्; ज्ञानस्यासम्भवे च ज्ञातृज्ञेयासम्भवः । एतेन अवश्यवेद्यत्वानभ्युपगमादिति नैयायिकोक्तं निरस्तम्। कस्यचिज्ज्ञानस्य स्वप्रकाशत्वे तु लाघवात्पूर्वस्यापि तथात्वं ग्राह्यम्। क्वचित्सामान्यतः स्वपरनिर्वाहकत्वेऽस्मदुक्तं सोढव्यम्। एवं स्वज्ञानस्यानुमेयत्वमानसप्रत्यक्षत्वयोरयोगात् [१] तदग्रहे च परस्मिन्नपि तथैवेति व्युत्पत्त्याद्यसम्भवेनागमस्यापि निर्मूलत्वादन्ततो माध्यमिकवादप्रसङ्गमनिच्छतामस्मत्पक्षः शिष्यत इत्याह—अपि तु इति। सर्वं साधयन्ती इति हेतुपरम्। नित्यस्य स्वप्रकाशस्य स्वजन्यत्वायोगादन्यनिरपेक्षप्रकाशत्वमेव प्रक्रान्तमिह स्पष्टीकृतम्। अयं भावः—

धियः स्वकर्मताभावान्न स्वेन स्वप्रकाशनम्।
इत्यसत् [२] स्वान्यनिर्वाहसमाधेर्दुस्त्यजत्वतः ॥ ३४८ ॥

धीरस्तीति मता [३] शब्दशब्दे लक्षणलक्षणे ।
इष्टस्स्वपरनिर्वाहः सर्वमित्यादि धीष्वपि ॥ ३४९ ॥

---

१. तदग्रहणे पा. (घ).
२. स्वात्म पा (सु)
३ शब्दे शब्दलक्षण पा. (सु)

कर्मकर्तृविरोधोऽपि स्वबुद्ध्यादौ न दृश्यते ।
क्रियाकर्मविरोधश्च वारणीयः क्रियोक्तिवत् ॥ ३५० ॥

अङ्गुल्यग्रादिदृष्टान्तमात्रमप्यत्र निष्फलम् ।
दृष्टयदृष्टिविशेषेण सर्ववस्तुव्यवस्थितेः ॥ ३५१ ॥

अस्पृष्टिस्स्वात्मनस्तत्र संयोगद्विष्ठताबलात् ।
दृष्टान्तमात्रभक्तेन दीपादिः किं न दृश्यते ॥ ३५२ ॥

अन्तर्ज्योतिः स्वयंज्योतिरात्मज्योतिरिति श्रुतिः ।
स्वरसाद्वदति स्वान्यनिरपेक्षप्रकाशताम् ॥ ३५३ ॥

स्वान्यधीहेतवो दृष्टा मनोधर्मादयस्तथा ।
स्वयं भिद्यत इत्यादौ सम्मता कर्मकर्तृता ॥ ३५४ ॥

आत्मानं रक्षतीत्यादिष्वपि द्वैरूप्यमक्षतम् ।
प्रदीपादिनयस्थाप्या न मुधा बाधमर्हति ॥ ३५५ ॥

यदा विषयमात्रस्य व्याहारस्तत्र वेदितुः ।
अनुभूयत इत्युक्तिरविवक्षा निवर्त्तिता ॥ ३५६ ॥

व्यवहारनिवृत्त्या च न प्रकाश [1] निवर्तनम् ।
दृष्टेऽप्यव्यवहारस्य प्राचुर्येणोपलम्भतः ॥ ३५७ ॥ इति ।

---

[1] विवर्जनम् पा (सु)

अत्र सूचितं साधनद्वयं वैशद्याय प्रयुज्यत इत्याह—**प्रयोगश्च** इति। यद्वा—उक्तप्रकारेण स्वप्रकाशत्वमगत्या ग्राह्यम्; तत्रानुमानान्तरं चास्तीति भावः। ग्रन्थलाघवाय प्रयोगद्वयमिह तन्त्रितम्। पिशाचानां तद्भाषयैवोत्तरं देयमिति न्यायात् [१] परमतान्वारोहेण बुद्धेरपि प्राकट्यकल्पनयात्र धर्मशब्दः, अन्यथापसिद्धान्तात्; कल्पितधर्मान्तराभ्युपगमेन वा तदुक्तिः। इदं च हेतुद्वयं यदि परोक्तकर्मकर्तृविरोधशान्त्यै संभावनार्थं [२] स्यात्, तदा नातीवात्र शोध्यमस्ति। साक्षादनुमानत्वमिच्छतां तु [३] यथाश्रुतेऽनुभूतित्वादिभिः सिद्धसाध्यत्वात्तत्र [४] तत्र कर्तृव्यभिचाराच्चाभिप्रायक्लृप्त्या पूर्वानुमितावेवं प्रयोगो द्रष्टव्यः—अनुभूतिः, परगतस्वजन्यधर्मात्यन्तसजातीयस्वावश्यम्भाविधर्मयोगे स्वात्यन्तसजातीयापेक्षानियमरहिता, स्वविजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितधर्महेतुत्वादति। स्वस्मिन्स्वजन्यधर्मासिद्धेः परगतत्वोक्तिः स्थानप्रदर्शनार्था; एकत्वादिभिः सिद्धसाध्यतां वारयितुं जन्यशब्दः अत्यन्तशब्दश्च। अनुभूत्या परत्र जन्यो धर्मः प्राकट्यमेव। तस्य स्वान्यमात्रनिष्ठस्य स्वधर्मत्वायोगात् [५] सजातीयोक्तिः। बुद्धिव्यतिरिक्ते बोद्धरि बुद्धिजन्यसुखादिसजातीयानां बुद्धावभावेन बाधं स्वाश्रयस्य रूपित्वाद्यापादके रूपादौ रूपित्वाद्यभावाद् दृष्टान्तस्य साध्यशून्यतां च परिहर्तुं स्वावश्यम्भावित्वोक्तिः। यद्यपि नित्येऽनुभूतिप्राकट्येऽन्वारूढेऽन्यनैरपेक्ष्यमात्रोक्तिः पर्याप्ता; तथापि रूपादौ दृष्टान्ते चाक्षुषत्वस्य स्थूलनिष्ठत्वादिसापेक्षतया साध्यवैकल्यं स्यादिति तन्निरासाय स्वात्यन्तसजातीयापेक्षारहितेत्युक्तम्। "यथा-

---

१. परमतान्वारोहणबुद्धे: पा (क, घ)	२. वा स्यात् पा (सु)
३. यथाश्रुतेरनु. पा. (ख, घ).	४ तत्र व्यभिचाराच्च. पा (सु).
५. तज्जातीय. पा. (क, ख, घ)

ग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति। [१]एवमेवास्मादात्मनः [२]सर्वाणि भूतानि" इत्यादिश्रुत्या जीवतज्ज्ञानभेदकल्पनाद्व्यावहारिकव्यवस्थया परमतनयेनानुमानादिगम्ये गुर्वादिज्ञाने बाधपरिहाराय नियमशब्दः। तद्धि गुरुमते सिद्धान्ते च वर्तमानकाले स्वेन स्वाश्रयाय भाति। यद्वा—परत्र [३]छिन्नत्वाद्यापादके कुठारादौ द्वैधीभावस्य कदाचिदत्यन्त [४]विजातीयापेक्षत्वेऽपि नियमाभावेनातिचारनिरास इति नियमोक्तिसाफल्यम्। अत्यन्तसाजात्यं चात्र निर्दिष्टाकारेण साम्यम्। हेतौ तु [५]सजातीये द्रव्यान्तरे संयुक्तत्वहेतोर्द्रव्यस्य स्वगतसंयुक्तत्वे द्रव्यान्तरापेक्षानियमात्तद्व्यावृत्त्यै स्वविजातीयोक्तिः। स्वानन्तरेत्यादिना परस्मिन्पुत्रत्वादिहेतौ पितरि स्वपुत्रत्वे पितृसापेक्षत्वदर्शनात्तस्मिन्ननैकान्त्यं निरस्तम्। पुत्रत्वादिकं हि पित्राद्यनन्तरकालादुत्तरत्राप्यनुवर्तते। एवं द्रव्यान्तरच्छिन्नत्वापादके द्रव्यान्तरेण छेद्येऽपि द्रव्ये न व्यभिचारः। द्वितीयानुमानेऽपि अनुभूतिरन्याधीनव्यवहारा इत्युक्ते अन्यनिरपेक्षघटादिव्यवहारहेतुतया सिद्धसाध्यतां परिहर्तुं स्वशब्दः। तथापि विवक्षावागादिसापेक्षतया बाधो दृष्टान्ते च साध्यहानिः स्यात्; अतः स्वात्यन्तसजातीयानपेक्षत्वं विवक्षितम्। नियमग्रहणं च पूर्ववत्। तदिहानुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वव्यवहारा इति [६]साध्यस्थितिः, हेतुस्तु हेतुत्वादित्येवालम्; क्वचिदपि व्यभिचारादृष्टेः स्वसम्बन्धात्—इत्यादिविशेषणत्रयोक्तिस्तु तत्कृतविशेषवैशद्यार्था। एवं नामोक्तमात्मसिद्धौ—

---

१. एवमेवेमाः. पा. (क, ख, घ, सु) २. 'आत्मन सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' इति सम्पूर्णमौपनिषद वाक्यम्.

३. स्वच्छिन्नत्वाद्या. पा. (क, ख, घ) ४. सजातीया पा. (सु).

५. सजातीयद्रव्यान्तरे पा. (क) ६. 'साध्य' इति (सु, ख, घ). कोशेषु न.

" सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः ।
सर्वे पदार्थास्तेनात्मा [1] निरपेक्षात्मसिद्धिकः ॥" इति ।

अत्र सिद्धिः—व्यवहारयोग्यतारूपः प्रकाशः ; तदुक्तिर्व्यवहारमप्युपलक्षयति ; उभयत्र पदार्थत्वादित्येव हेतुः । एवं पूर्वानुमानेऽपि पदार्थत्वाद्धेतुत्वादित्यादिमात्रमुपादाय ' स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशा " इति साध्यप्रयोगोऽप्यूह्यः । तच्च [2] निगमने सूचितम्—**अनुभूतिरात्मनः प्रकाशमानत्वे** [3] इति । [4] सजातीय [5] इत्यादौ आत्मनः श्रुतिसिद्धं ज्ञानत्वमवष्टभ्यात्मरूपं ज्ञानं स्वात्यन्तसजातीयापेक्षारहितस्वसिद्धिकमित्युच्यते । स्वसाध्यनिरपेक्षत्वोक्तिस्तु ; [6] प्रयोगान्तरार्था । साध्यम् व्यवहारानुगुणीकार्यम् ; बोध्यमित्यर्थः । आत्मा स्वबोध्यापेक्षारहितस्वप्रकाशः पदार्थत्वात् [7] इति । एतेन स्वबोध्यमन्तरेणापि भातीत्युक्तं भवति । दृष्टान्तानां त्वचेतनतया बोध्याभावादेव तत्प्रकाशः स्वबोध्यापेक्षारहितः । आस्तामेतत् ; प्रकृते [8] तु सामान्यतो व्याप्तिमाह—**य** इति । यद्यपि रूपवतामेव चाक्षुषत्वमिति नियमो नास्ति ; तथापि नीरूपं द्रव्यं सर्वमचाक्षुषमिति ; तेन दृष्टान्तमाह—**यथा** इति । अत्र प्रथमेन **आदि**शब्देन स्पर्शो गृह्यते । [9] द्वितीयेन स्पार्शनत्वं व्यवहारविशेषश्च । रूपादेर्व्यवहारविशेषहेतुत्वं तन्निमित्तचाक्षुषत्वाद्यापादनेन । एवंविधसामान्यव्याप्तौ केवलव्यतिरेकिविभ्रमं केचि-

---

१. निरपेक्षस्वसिद्धिक पा (सिद्धित्रये).
२. निगमनेन अनुभूति . पा. (सु)    ३. इत्यनेन सूचितम् पा. (सु)
४. अत्र सजातीय पा. (सु)    ५ इत्यादिना पा. (सु).
६. प्रयोगान्तरार्थसाध्यम् (क, ख, घ)    ७. ' इति ' इति (क, ख, घ). कोशेषु न.
८. ' तु ' इति (सु) कोशे न    ९. तद् द्वितीयेन. पा. (घ)

दाहुः । एतद्वा पक्षधर्मतालब्धविशेषं वा सूचयन्निगमयति—अत इति । स्वयमेव हेतुः; [१] बुद्ध्यन्तरनिरपेक्ष इत्यर्थः । अत्रापि तत्प्रयोगस्तु—अनुभूतिः, अनन्याधीनस्वप्रकाशा, परप्रकाशासाधारणाभिव्यक्तिहेतुत्वात्; यन्नोक्तसाध्यं, तन्नोक्तहेतुकमिति । एवं व्यवहारेऽप्यूह्यम् ।

सेयं स्वयम्प्रकाशानुभूतिर्नित्या च, प्रागभावाद्यभावात् । तदभावश्च स्वतस्सिद्धत्वादेव । न हि अनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वावगन्तुं शक्यते । अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति; तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति [२] कथं सा स्वाभावमवगमयति? एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती [३] स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात् । अस्याः प्रागभावं साधयत्प्रमाणम् 'अनुभूतिरियम्' इति विषयीकृत्य तदभावं साधयेत् । स्वतस्सिद्धत्वेन 'इयम्' इति विषयीकारानर्हत्वान्न तत्प्रागभावोऽन्यतः शक्यावगमः । अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्ति[४]प्रतिबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ।

ननु ब्रह्म नित्यं श्रुतम्; धीस्तु अनित्या; सा कथं [५] तत्स्यात्? योगाचारो-

---

१. बुद्ध्यन्तरनिरपेक्षमेव. पा (सु).

२. कथं स्वाभा. पा.

३ कथं स्वाभावे. पा

४. प्रतिसम्बद्धाश्च. पा.

५ 'स्यात्' इति (ख) कोशे न.

त्काच्च त्वदुक्तस्य को भेद इत्यत्राह—सेयम् इति; शास्त्रप्रत्यक्षाभ्यां सच्चिद्रूपतयैव सिद्धेत्यर्थः। अत्र स्वयम्प्रकाश इति नित्यत्वनिदानोक्तिः। सर्वदा सत्त्वमुभयान्तशून्यत्वं वा नित्यत्वम्; तच्च "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिश्रुतिसिद्धम्; ज्ञानत्वं च ब्रह्मणः श्रुतम्; अतस्तदविरोध इति भावः। श्रुत्या [1] अपि प्रत्यक्षविरुद्धं दुर्वचमित्यत्र [2] विरोधाभावाभिप्रायेण हेतुमाह—प्राक् इति; संवित्प्रागभावप्रध्वंसयोर्भ्रान्तिमिद्धतया स्वरूपतस्तदभावस्य स्थाप्यमानत्वादित्याशयः। अत एव न माध्याविशेषशङ्का। धीनित्यत्वश्रुतिरन्यपरा; न चान्यदिह मानम्, इत्यत्राह—तत् इति। एवकार इह प्रागेव सूचितत्वं नैरपेक्ष्यं वा व्यनक्ति। ननु स्वयम्प्रकाशत्वमिह न लिङ्गम्; सपक्षे सत्यपि तत्र [3] क्वचिदप्यवृत्तेः। सन्ति हि प्रागभावरहितत्वे साध्ये प्रागभावाः सपक्षाः, प्रध्वंसरहितत्वे च प्रध्वंसाः, तदुभयराहित्ये च खपुष्पादिः। आहुश्च—

अनुभूतेर्नित्यत्वम्

"यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते।
तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम्"॥ इति।

तत्राह—न हि इति; स्वप्रकाशत्वस्य लिङ्गत्वाभावेऽपि विकल्पानुपपत्तिद्वारा विवक्षितनिदानत्वं स्यादिति भावः। अत्र प्रागभावोक्तिः प्रध्वंसस्याप्युपलक्षिका। स्वतःपक्षेऽपि धीः सत्यसती वा स्वाभावग्राहिणीति विकल्पं मत्वा आद्यं निरस्यति—अनुभूतिः इति। ननु स्वयं सती भावमनात्रं वा

---

१. 'अपि' इति (सु, ख, घ). कोशेषु न.
२. विरोधाभावादित्यभिप्रायेण. पा. (क, ख, घ)
३. क्वचिदप्रवृत्ते. पा (क)

विषयान्तरमिव स्वाभावमपि [1] किं न गृह्णीयादित्यत्र विषयस्याभावात्तस्य दुर्ग्रहत्व-माह—तस्या इति। यद्यपि अन्योन्याभावादेः स्वप्रतियोगिसमकालत्वमस्ति; तथापि प्रागभावप्रध्वंसयोर्न तत् स्यादित्यभिप्रायेण विरोधादेव इत्युक्तम्। द्वितीयं विरोधिनो [2] ग्रहणस्यैवाभावादाक्षिपति—एवम् इति; अन्यतराभावसाम्यप्रकारेणे-त्यर्थः। विरोधं विवृणोति—अनुभूतिः इति। स्वयमसती वन्ध्यासुतधीवत्स्यादिति भावः। अन्यतःपक्षोऽपि विकल्पासह इत्याह—नापि इति। अन्यत्प्रमाण-मनुभूतिं विषयीकृत्य न वेति विकल्प्य पूर्वत्र प्राक् साधितेन विरोधमाह—अनुभूतेः इति। द्वितीये प्रतियोग्यग्रहे कथमभावग्रह इत्यभिप्रायेणाह—अस्या इति; न हि धीग्राह्यस्य घटादेरभाव इह साध्य इत्याशयः। विषयीकारपक्षपरिशेषेण तद्विरोधं निगमयति—स्वत इति। पराक्त्ववेद्यत्वयोरभावात् 'इयम्' इति विषयी-कारानर्हत्वम्। एवमभावस्याग्रहेऽपि भावस्योत्पत्त्यादेः स्वतोऽन्यतो वा ग्रहः स्यादि-त्यत्राह—अत इति; उक्तविकल्पानुपपत्तेस्तस्याश्चात्रापि सम्भवादित्याशयः। न हि स्वतः स्वविकारग्रहः, तस्याः स्वरूपमात्र [3] ग्राहित्वात्। न चान्यतः, अवेद्यत्वात्। तद्धर्मतया ग्रहणे हि तद्विषयत्वं दुस्त्यजमेव, प्रागभावाभावात्। कारणं हि सर्वकार्याणां तत्तत्प्रागभावः। न च तद्रहितं खरशृङ्गमुत्पद्यत इति भावः। उत्पत्तिप्रतिबद्धाः; तद्व्याप्ता इत्यर्थः। भावविकाराः—भाव-रूपा विकाराः, बाह्यानां भावानां सम्भवन्तो वा। धीर्निर्विकारा अनुत्पन्नत्वादिति व्यतिरेकी।

**अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धो**

---

१. 'किम्' इति (ख) कोशे न.  २. ग्रहणस्याभावात्. पा. (ख).

३. गृहीतत्वात्. पा. (क).

पलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न सम्भवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा। अजडत्वाच्चानात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति।

एतेनैव सजातीयमपि निरस्यति—**अनुत्पन्नं** इति। इयम् इत्यनेन [1] प्राग्वत्स्वतोऽन्यतश्च नानात्वेनापि दुर्ग्रहेति सूच्यते। **आत्मनि**; अनुभूतिशब्दोपात्ते स्वात्मनीत्यर्थः; तत्र धीप्रतियोगिकभेदो नास्ति; स तु जडेष्वेवेति भावः। अनुत्पन्नशब्देन [2] विवक्षितस्य हेतोर्व्याप्तिपक्षधर्मत्वे व्यनक्ति—**व्यापक** इति; नानात्वव्यापकमुत्पन्नत्वम्; तद्विरुद्धस्यानुत्पन्नत्वस्य पक्षे प्रमितत्वादित्यर्थः। यन्नाना तदुत्पन्नमिति व्यभिचारानुपलम्भेन द्रढयति—**न हि** इति। नानाभूतं न ह्यनुत्पन्नं दृष्टमित्यन्वयः। धीः, सजातीयरहिता, [3] अजडत्वात्; यन्नैवं तन्नैवं यथा घट इति प्रयोगः। परमाण्वादिसंज्ञास्तु केचिदर्थाः सजातीयवन्तोऽप्यनुत्पन्ना इति परेष्टं मानशून्यमिति भावः। उक्तव्यतिरेकिसाध्ययोरन्वयिनमप्याह—**भेदादीनाम्** इति। **आदि**शब्देन विकारा गृह्यन्ते। भेदा विकाराश्च, नानुभूतिधर्माः, अनुभाव्यत्वाद्रूपादिवदिति। ननु अनुभूतेरसाधारणानि धीत्वस्वप्रकाशत्वनित्यत्वा[4]जडत्वनिर्विकारत्वनिर्भेदत्वानि

अनुभूतेः भेदनिरासः

1. प्राग्वद्वस्तुतः. पा. (ख, घ). 2. विवक्षितस्यापि. पा (क, ख, घ.)
3. अजत्वात्. पा (ख, घ) 4. अजरत्व पा. (सु, ख, घ)

व्यतिरेकोक्तानि। अनृतादिव्यावृत्तयश्च प्रागुक्ताः। तत्पक्षीकारबहिष्कारयोर्वान्वयव्य-भिन्नानां न्यानामित्यत्राह—अत इति; भावाभावरूपाणां सर्वेषां धर्माणाम् [1] आदि-शब्देन संग्रहेण पक्षीकृतत्वादित्यर्थः। एवकारः साधकत्वदार्ढ्यपरः। अन्योऽपि; क्वचिच्छ्रुतिसिद्धोऽस्मदुक्तोऽपीति यावत्। [2] कल्पितैस्तु धर्मैरत्र तन्मात्रव्यवहारः—

ज्ञानभेदनिषेधे तु ज्ञानानामैक्यमत्र नः।
जडाद्भेदनिषेधे तु तन्मिथ्यात्वान्न तद्भवेत्॥ ३५८॥

जडादिव्यावृत्तयश्च स्वरूपानतिरिक्ता इत्युक्तम्। धीः, निर्धर्मा, अनुभव-स्वरूपत्वादिति व्यतिरेकी, विगीताः, नानुभूतिधर्माः, अनुभाव्यत्वादिति पूर्वोक्तौ [3] वीतावीताविह पदद्वयेन स्मारितौ। उक्तं च खण्डने—"प्रकाशात्मतामात्र-स्यैव स्वतस्सिद्धत्वेन जडात्मनां केषांचिद्धर्माणां तदन्तर्भावानुपपत्तिः" इति। अनुभूतेर्निर्विशेषत्वादिसाधनेऽपि जिज्ञासितस्यात्मनः किमायातम्? स हि बह्वीभिः श्रुतिभिर्ज्ञानादिधर्माश्रयत्वेन भातीत्यत्राह—यत इति। प्रागुक्तप्रकारेण निर्धूतनिखिलभेदत्वादाश्रयाख्यो विजातीयभेदोऽपि कल्पितः; अतः सः, नात्मा, संवि-दन्यत्वात् घटवदिति भावः। स्वप्रकाशत्वनिर्गुणत्वे च आत्म [4] स्वभावतया भासेते संविदि स्थापिते। अनेन श्रुतिसिद्ध आत्मा धीरूपत्वेन प्रत्यभिज्ञाप्यत इत्या-शयवतोक्तम्—सैवात्मा इति। धीः, आत्मा, निर्विशेषत्वाद्धीत्वाच्चेति व्यतिरेकिद्वय-

---

१. आदिना. पा. (क), आदिशब्दे पा. (ख, घ). २. कल्पितैर्धर्मैः. पा. (क).
३. अपीति. पा. (ख). ४. 'स्वभाव'–'धीरात्मा' इत्यन्ता पङ्क्तिः (क) कोशे न.

मिह विवक्षितम् । [1] प्रकृतमजडत्वमपि तादृशं हेतुमाह—अजडत्वाच्च इति । व्यतिरेकव्याप्तिं पक्षधर्मतां च व्यञ्जयन् व्यापकनिवृत्त्या व्याप्यनिवृत्तिमाह— अनात्मत्वव्याप्तम् इति ; अनात्मत्वे व्याप्ये व्याप्तव्यापकमित्यर्थः ; कर्तरि क्तः । योऽनात्मा स जडः यथा देहादिः, धीस्तु न तथा ; तस्मादात्मा ।

**ननु च अहं जानामीति ज्ञातृता प्रतीतिसिद्धा ; नैवम्—सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य ; अनुभूतेः स्वात्मनि कर्तृत्वायोगात् । अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम् । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् । तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति ? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् ।**

अत्र ज्ञानाश्रयोऽहमर्थस्त्वात्मेति सर्वलोकस्वानुभवप्रत्यक्षेण बाध इति चोदयति—ननु च इति । यथाहुः निरालम्बनानुमाने—“ सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र ते ध्रुवम् ” इति स्वतःप्रमात्वम् [2] अभिप्रेत्यात्र प्रतीतिशब्दः । स्वारसिकबाधाभावेऽपि यौक्तिकबाधात् खनैल्यादिकल्पत्वं मत्वा प्रतिवक्ति—नैवम् इति । आत्मनाऽपि ज्ञातृत्वं [3] देहादिज्ञातृत्ववद्बाधितत्वाद्भ्रान्तिसिद्धमित्याह—सा इति । हेतुत्वपरोऽयं परामर्शः—विमतं ज्ञातृत्वं, भ्रान्तिसिद्धं, ज्ञातृत्वस्वरूपत्वात्संमतवदिति ।

आत्मन. अहम्प्रत्ययाविषयत्वम्

---

१ प्रकृते अजडत्वमपि. पा (सु).

२ अभ्युपेत्य पा (सु).

३. ‘ देहादि ’ इति (क) कोशे नोपलभ्यते.

दर्शदेर्ज्ञातृत्वमिच्छतामपि अविगानार्थमन्यत्राप्येकधीविषये बाध्याबाध्यांशविवेकं दर्शयति—रजतता इति। अन्यथाख्यात्यन्वारोहेणेदं निदर्शनम्। अयमं हि शुक्त्यवच्छिन्नमायांशकर्बुरस्य चैतन्यस्य रजततया विवर्तः। शुक्तौ रजतत्वबाधेऽपि प्रमाणसिद्धे रजते रजततेव देहादौ बाधिताप्यात्मनि ज्ञातृता स्यादित्यत्र [1]आत्मस्वरूपभूतज्ञानाश्रयत्वं वा कर्मकर्त्रवच्छिन्नवृत्तिज्ञानाश्रयत्वं वा ज्ञातृत्वमिति विकल्पं मत्वा आद्येऽपि, स्वरूपज्ञानाश्रयत्वमिदं स्वरूपस्यैव, [2]अन्यस्य वा इति विकल्पे स्वरूपस्येति पक्षमात्माश्रयेण निरस्यति—अनुभूतेः इति। कर्तृत्वमिहाश्रयत्वम्; जनकत्वविवक्षायामप्यात्माश्रयस्सिद्धः। कथं तस्यात्मनः स्वस्यादिभिर्ज्ञातृत्वप्रतीतिरित्यत्र तत्सम्भवम् अन्यस्य वा इति [3]विकल्पितपक्षस्यासम्भवं च ज्ञापयितुमाह—अत इति; स्वस्य स्वाश्रयत्वायोगादित्यर्थः। अन्तरङ्गाहमर्थधर्माभ्यामैक्यव्यञ्जनाय [4] देहपिण्ड इत्यन्तम्। [5]ज्ञातृत्वम् इति; यथा—आत्मनि मनुष्यत्वादिविशिष्टपिण्डत्वमध्यस्तम्; तथा ज्ञातृभूताहमर्थाभिमानो ज्ञातृत्वमित्यर्थः। तत्रानुभूतिबहिर्भूतत्वमपि हेतुः। स तु 'ज्ञातृत्वं हि' इत्युत्तरवाक्ये स्पष्टः। ज्ञातृत्वमध्यस्तमित्यनेनैवात्मनो वृत्तिज्ञानाश्रयत्वपक्षोऽपि व्युदस्तः; तदुपपादनाय प्रतिक्षेप्यस्वरूपं निष्कर्षति—ज्ञातृत्वं हि इति। हिर्हेतौ; यतो ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वम्, अत इत्यर्थः। प्रस्तुते को विरोधः? इत्यत्राह—तच्च इति।

---

१ 'आत्म' इति (मु) कोशे न २ वान्यस्य पा. (मु).

३. विकल्पितत्वपक्षस्य. पा. (क) ४. 'देह' इति (मु) कोशे न.

टि—'विशिष्टदेहपिण्ड' इति (क, ख, घ,) कोशेषु प्रतीकोपलब्धे श्रीभाष्ये 'विशिष्ट देहपिण्ड' इति पाठ आचार्यचरणानुगृहीत इति प्रतिभाति, 'देह' इति मूलकोशेषु न.

५. 'ज्ञातृत्वमिति यथा' इति (क, ख, घ) कोशेषु न.

चो हेतौ, उक्ताकारेणाकारान्तरसमुच्चयार्थो वा । **विक्रियात्मकं जडम्** इति । व्यवस्थाप्यम् [१] आश्रयविशेषणं व्यनक्ति—**विकारिद्रव्याहङ्कारग्रन्थिस्थम्** इति । स्वरूपानुबन्धित्वाभावादनात्मत्वव्यक्त्यै देहादिवद् [२] ग्रन्थिस्थत्वोक्तिः । ईदृशस्य [३]औचित्योपलम्भमाह—**अविक्रिये** इति । परेषु व्याप्रियमाणेषु निर्व्यापारो हि साक्षी ; अतः "साक्षाद्द्रष्टरि संज्ञायाम्" इत्यनुशिष्ट्या "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिरपि द्रष्टृत्वपरेति न भ्रमितव्यम् ; किं तु अविद्यागोचरानुभवस्वरूप [४] परेत्यभिप्रेत्याह—**साक्षिणि** इति । अनेन सूचितः श्रुतिविरोधोऽपि । तन्निर्धर्मत्वविरोधमप्याह—**चिन्मात्रात्मनि** इति । "अनुभाव्यत्वात्" इति प्रागुक्तहेतुनैव कर्तृत्वादेरप्यनात्मधर्मत्वं साधितमिति स्थापयति—**दृश्यधीन** इति । कर्तृत्वादिः, नात्मधर्मः, दृश्यधीनसिद्धित्वाद्रूपादिवदित्यनुमानमत्राभिप्रेतम् । **कर्तृत्वादि** इति आदिशब्देनाहम्प्रत्ययगोचरत्वग्रहः ।

**सुषुप्तिमूर्च्छादौ [५] अहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम् । कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धात् [६] देहात्तत्क्रिया [७]फलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथा अहमर्थाज्ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् । एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तम-**

---

१. आत्माश्रय. पा (सु). २ ग्रन्थिस्थत्वम् पा (क, ख, घ).
३. औचित्योपलम्भाभ्यामाह पा (क, ख, घ)
४. परेत्याह. पा. (सु) ५ अहंप्रत्ययाभावे पा.
६. देहात्क्रिया. पा ७ फलस्य. पा.

अन्यत्र न तथा ; [1] संसाराभावान्मुक्तिशास्त्रं नारभ्यमित्यत्राह—**अहं-प्रत्यय** इति। **कर्तृतया प्रसिद्धाद्देहात्** इति। कथम्? इत्थम्—प्रचुराणां विष्णुक्रमण [2] सर्पणादीनां वैधक्रियाणां साक्षाद्देहाश्रयत्वाद्वाङ्मनसव्यापाराणां देह [3] सापेक्षत्वादिति। **प्रामाणिकानाम्** ; श्रुत्याद्यनुसारिणामित्यर्थः। तदिहाकर्तुर्भोक्तृतासम्भवेन [4] एतेन बाधायोगचोद्यं परास्तम्। अहन्त्वकर्तृत्वादौ बाधश्च पूर्वोक्तः सुषुप्त्यादिविषयश्रुतिप्रसिद्धः। [5] आत्मा श्रुतः, तस्य [6] तत्तत्क्रियानाश्रयत्वेऽपि [7] आत्मन ऐहिकामुष्मिक [8] तत्तत्फलभोक्तृत्वं प्रामाणिकैः सर्वैरङ्गीकृतम्। तथानात्मनोऽहमर्थस्य कर्तृत्वेऽपि गतिः। स्मर्यते च—"कार्यकारणकर्तृत्वे" [9] इत्यादि। तर्हि भोक्तृत्वादेव ज्ञातृत्वादिकं स्यादित्यत्र दत्तोत्तरत्वं मत्वाह—**तथा** इति। अयं भावः—कर्तृत्व [10] भोक्तृत्वविशिष्टोऽहमर्थः, नात्मा, अहन्धीवेद्यत्वाद्देहवत्। अभोक्तृत्वेऽप्यात्मनो भोक्तृत्वाध्यासात्तदुक्तिः। मुक्तिशास्त्रं च तावन्मात्रनिवृत्त्यर्थमिति। न हि कर्ता साक्षी स्यादित्यभिप्रायेण **साक्षि**त्वोक्तिः। **प्रतिपत्तव्यम्** ; उक्तैर्हेतुभिः "यस्य नाहंकृतो भावः" इत्यादिशास्त्रैश्चेति शेषः। ननु अविद्याशबले चिद्रूपात्मनि अहमिति प्रथमोऽध्यासस्त्वदुक्तः ; तथा च शुक्तिस्थतया रूप्यवद्धीस्थतयाहमर्थो भासेत ; प्रत्युत तद्धर्मतया धीर्भाति। तथात्वे धियोऽहमर्थविकारत्वं जन्मादिविकाराश्रयत्वं च स्यादित्यत्राह—**एवम्** इति। **अभिव्यञ्जकः** इति हेतुगर्भम्। **जडोऽपि** इति घटवद्व्यञ्ज-

---

१. 'तथा च' इति (सु). कोश एव दृश्यते
२. संस्परणादीनाम्. पा. (सु)
३. सापेक्षत्वाच्चेति. पा. (सु).
४. तेन. पा. (सु).
५. आत्माश्रुतस्य. पा. (क, ख, घ)
६. तत्तत्क्रियाश्रयत्वे पा. (क, ख, घ).
७. 'आत्मनः' इति (सु) कोशे न.
८. तत्फल. पा (क, ख, घ).
९. इत्यादीति भावः. पा. (सु)
१०. अभोक्तृत्व. पा. (सु).

कत्वासम्भवशङ्काव्युदासार्थम् । अहङ्कारस्थतयाभिव्यक्तिमात्रमेव ; न तु वास्तवी तत्र वृत्तिः । दर्पणप्रतिहतभान्यायेन तु तद्धर्मत्वोक्तिः ; अतो न तद्विकारि[१] त्वादिप्रसङ्गः । इन्द्रियवद्व्यञ्जकत्वमस्तु किमिति स्वनिष्ठतया व्यनक्तीत्यत्राह—**आत्मस्थतया** इति । यथादर्शनं 'स्वभावो दुरतिक्रमः' इत्यभिप्रायेण **स्वभावशब्दः** । अभिव्यञ्जकानामीदृक्स्वभावत्वं बुद्धीनां प्रमात्ववदौत्सर्गिकं क्वचिदपवादेऽपि भूयोदृष्ट्या सिध्यतीत्याह—**दर्पण** इति । तत्तद्विशेषप्रयुक्तत्वव्युदासाय बहूदाहृतिः । [२] जातिव्यक्त्युदाहरणेन चक्षुष्प्रतिफलनोपाधिकत्वशङ्का चापास्ता । उक्तप्रकारेणाधिष्ठानवैपरित्य[३] आदिचोद्यस्यापास्तत्वमाह—**तत्कृत** इति ; व्यञ्जकसामान्यस्वभावसिद्ध इत्यर्थः ।

स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः ; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्व[४]दर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः । यतः 'अहं जानामि' इति ज्ञातायमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः ; अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र हि [५]अहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्मावभासते । अत एव सुप्तोत्थितः कदाचित् 'मामप्यहं न ज्ञातवान्' इति परामृशति । तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विव-

---

१. त्वादिति. पा (ख, घ). २. जात्युदाहरणेन पा (क, घ).
३. 'आदि' इति (ख). कोशे न. ४ 'उपदर्शनात्.' पा.
५. 'अहमुल्लेख' पा.

र्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्व-विद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते इति ।

महापूर्वपक्ष-निगमनम्

ननु [1] स्वप्रकाशस्य न व्यञ्जकापेक्षा, व्यञ्जकानां च न क्वचिदपि स्वव्यङ्ग्यैर्व्यञ्जनं दृष्टम् ; अनुभूतिश्च [2] न व्यङ्क्त्री ; अक्षरवज्जडत्वप्रसङ्गात् । अहङ्कारोऽपि [3] नाव्यङ्क्ता व्यङ्क्तृबुद्ध्यधीनसिद्धित्वाभावेन परमार्थसत्त्वप्रसङ्गात् । न च स्वयं व्यक्तः ; अनिष्टत्वात् । अतो मिथो व्यङ्क्तृव्यङ्ग्यत्वेऽन्योन्याश्रयः स्यादिति चोद्यमनूद्य क्षिपति—**स्वप्रकाशाया** इति । सजातीयनिरपेक्षतया स्वयम्भातस्यापि परेण [4] व्यङ्ग्यत्वं तदभि [5] व्यञ्जकत्वं च निदर्शयति—**रवि** इति । करतलस्य रविकरव्यञ्जकत्वम् [6] असिद्धमित्यत्राह—**जालक** इति । एतेन नित्यसिद्धायाः स्वरूपव्यक्तेरन्यैवाहङ्कारजन्याभिव्यक्तिरित्यपि सूच्यते । पूर्वमहम्बुद्धेः सुषुप्त्यादावभावात्सिद्धान्तिसंमतस्वरूप [7] धीत्वयोगेनान्यगोचरत्वमुक्तम् । अत्र प्रत्येतुः प्रत्येतव्यादव्यतिरेकोऽहन्त्वम् ; तच्चात्मनः कादचित्कमपि सत्यमितिमन्यमानं प्रत्याह—**यत** इति । व्यापकाभावे व्याप्यं नेति व्यतिरेक [8] व्याप्त्या साध्यस्यात्र साधकसद्भावार्थतया तद्धेतुत्वोक्तिः, न तु तद्बोधकतया । अहङ्कारस्य धर्मतानिषेधोऽहन्त्वधर्मतानिषेधार्थः । ज्ञातृत्वादिकं वा भावप्रधानम् ; ज्ञातृत्वादिसहितमहन्त्वमित्यर्थः । एवकारोऽन्यथासिद्ध्यपोहार्थः । ज्ञातृत्वाहन्त्वे, मिथ्याभूते अनात्मधर्मौ च, सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवदिति प्रयोगः । स्वरूपासिद्धोऽयं हेतुरिति वादिनं प्रत्याह—**तत्र** इति । हिहेतौ शास्त्रप्रसिद्धौ

---

१. स्वप्रकाशज्ञानस्य पा (सु)
२. नाव्यक्ता पा. (क, ख, घ).
३. नाव्यक्त पा. (क, ख, घ)
४. व्यङ्ग्यम् . पा (ख, घ).
५ व्यञ्जकं च. पा (ख, घ)
६. 'असिद्धम्' इति (क) कोशे न.
७. धीत्वायोगेन. पा. (सु)
८ वृत्त्या पा. (क, ख, घ).

वा। "नाहं खलु" इत्यादिभिः सुषुप्तावहन्धीनिवृत्तिस्सिद्धा; मुक्तौ च "अहङ्कारबलं दर्पम्" इत्यादिभिः। न केवलं शास्त्रेण, प्रबुद्धस्य [१] सुषुप्तावस्थात्मपरामर्शप्रकाराच्च तदानीमहन्धीनिवृत्तिमाह—**अत एव** इति। अत्रापि **अत** इति साध्यपरम्। 'यदप्याहुः' इत्यादिना प्रपञ्चितं वस्तुसामर्थ्यं परमप्रकृतकर्मनैरपेक्ष्यव्यक्त्यै निगमयति—**तस्मात्** इति; प्रमाणैस्तदनुग्राहकैश्च स्थापनादित्यर्थः। अत्र निर्विशेषं प्राप्यम्। नित्यप्राप्ते तस्मिन्नोपासनादिसाध्या प्राप्तिः। निवर्त्यं मिथ्याभूतज्ञानम्; तन्निरासे च ज्ञानातिरिक्तं [२] नापेक्ष्यम्। निवर्तकं वाक्यजन्यमैक्यज्ञानम्; तच्च स्वोत्पत्तौ स्वफले वा न कर्मापेक्षितमिति वस्तुत्रयसामर्थ्यनिष्कर्षः। **निरस्त**—इत्यादिना सजातीयविजातीयनिवृत्तिः। **भेदविकल्पः**; तद्वैचित्र्यम्, तद्भ्रमो वा। **निर्विशेष** इति [३] स्वगतव्युदासाय। **चिन्मात्रैकरस**शब्दः प्राग्वत्। ज्ञातृज्ञेयाद्यो **विवर्ताः**। **भ्रान्त्या विवर्तते**; भ्रमगोचरमिथ्याभूतविकारवती भवतीत्यर्थः। **तच्छब्देन** भ्रान्तिः परामृश्यते **शुद्धमुक्त**शब्दौ—अविद्यातत्कार्यनिवृत्त्यर्थौ। **प्रतिपत्तये**; प्राप्तय इत्यर्थः। **सर्वे वेदान्ताः**—कारणपराः तच्छोधकाः तदैक्यबोधकाश्च। तेषामारभ्यत्वमिह विचारद्वारा। **इतिः** प्रकारे। इति **यदप्याहुः** इत्यन्वयः। सकारणस्य संसारस्य सत्यत्वेन ज्ञानबाध्यत्वाभावान्न तदर्थं शास्त्रम् [४] आरभ्यमित्यत्र तस्य मिथ्यात्वेन धीबाध्यत्वात्तत्प्रधानं शास्त्रमारभ्यमिति परोपन्यस्तवस्तुसामर्थ्यमिह स्पष्टीकृतम्॥

तस्मादनुपयुक्तत्वाद्विरोधाच्चात्र कर्मणः।
तच्चिन्तावृत्तता नेति वाक्यशेषो मनस्कृतः॥

॥ इति महापूर्वपक्षः॥

---

१. सुषुप्तावस्थात् परामर्श- पा. (सु).
२. नापेक्षितम् पा. (क).
३. स्वगतव्युदासः. पा. (क, ख, घ)
४. आरम्भणीयम्. पा. (सु)

महासिद्धान्तः ।

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम्, अनादिपापवासनादूषिताशेषशेमुषीकाणाम्, अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितामिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ।

अथानूदितनानार्थदोषजालमहोदधेः ।
महासिद्धान्तः संक्षिप्तप्रतिपत्त्यर्थं तदित्यादि निबध्यते ॥ ३६० ॥

प्रकाशयति तत्कारः परैरुक्तमनेकथा ।
अनेकग्रन्थसन्दर्भसाधितं तदुदीर्यते ॥ ३६१ ॥

दूष्यकात्स्न्र्यमिदं वक्ति प्रस्फुरद्दोषतामपि ।
आभासत्वमतो वक्तुमिदंशब्दः प्रयुज्यते ॥ ३६२ ॥

किं चासारमिदं सर्वं ; सति सारे हि कुत्रचित् ।
सारासारौ विवेक्तव्यौ [१] मल्लिकादिसमैरपि ॥ ३६३ ॥

यदि नोद्ध्रियते न्यायैः श्रुतिशल्यमिदं मतम् ।
उपप्लूयेत सन्मार्गस्तदाहुर्बाह्यदूषणे ॥ ३६४ ॥

---

१. सल्लिकेत्येव सर्वत्र कोशेषु दृश्यते, स च न प्रसिद्धार्थकः । मल्लिकशब्दो हंसभेदे वर्तते । 'राजहंसास्तु ते चञ्चु' इत्यारभ्य 'मलिनैर्मल्लिकाख्यास्ते' इत्यमरवचनात् ।

"प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥

सर्वेषु लक्षणेष्वेव स्वप्रमाणगणैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥

कर्मभ्यः फलसम्बन्धः पारलौक्यैहलौकिकः ।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥

तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसम्मतैः ।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥" इति ।

अत्र व्यावहारिकव्यवस्थया समाधिस्तु सांवृतव्यवस्थावदपाकरिष्यते । अत्र तदिदं परोक्तमुपायादित्रयमनादरणीयमिति साध्यम्; **औपनिषद्**—इत्यादिना तद्धेतूक्तिः । स्वपक्षे च प्राप्यादयस्त्रय इह परमपुरुषतद्भक्तितदपराधाः सूच्यन्ते । **औपनिषद**शब्देन "तं त्वौपनिषदं पुरुषम्" इत्यादि वाक्यं स्मारयता स्वपरपक्षयोः साधनदूषणोक्तिः । परेषां तु ब्रह्मणो वेद्यत्वानभ्युपगमात्तदिष्टविपरीतसगुणत्वादिश्रुत्या च बाधप्रदर्शनम् । **परमपुरुष**त्वोक्तिरीश्वरोत्तीर्णताव्युदासाय; अर्थात्त्रिमूर्तिसाम्योत्तीर्णतादिपक्षापोहः । सम्यग्[1]ज्ञानानुत्पत्त्यै भक्तिविरहाद्युक्तिः । भक्तिर्हि सम्यग्धीहेतुतया "यस्य देवे परा भक्तिः" "शुद्धभावं गतो भक्त्या" इत्यादिषु ख्याता । **पापस्य वासना** तत्त्वज्ञाननिवृत्तिमिथ्याज्ञानादेः सजातीयारम्भस्योत्पादनशक्तिः । तस्यास्तत्त्व-

---

१. ज्ञानानुपपत्त्यै. पा. (मु).

धीनाशकत्वं "पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः" इत्यादिषु प्रसिद्धम्। बीजाङ्कुरन्यायसूचनाय **अनादि**शब्दः । **अशेष**शब्देन [1] मानतर्कप्राप्योपायादिसर्वसंग्रहः। पापस्य भक्त्या निवर्त्यत्वं भक्त्यभावे यथार्ह [2] हेतुसाध्यभावो भक्तिनिरोधद्वारं चात्र सूच्यम्। * भक्त्यभावादिनोक्तार्थाभ्यां [3] मानतदितिकर्तव्यतादौ सर्वत्र प्रमिति [4] सामग्रीशैथिल्येन बहुविदामपि भ्रमादिसम्भवमाह—**अनधिगत** इति। 'सम्यक्' इत्युपस्कार्यम्। पदस्वरूपम्—[5] प्रकृतिप्रत्ययसमुदायात्मकं, **वाक्य**स्वरूपं तु तादृशां संघातः। **तदर्थः**—मुख्यामुख्यरूपः पदार्थो वाक्यार्थश्च। **तद्याथात्म्यम्**—दुरत्यजभेदगर्भत्वं वाक्यार्थस्य [6] यथार्हतात्पर्यगोचरत्वं च। भेदभूयस्तया, विरोधे सति प्रबलतया परेष्टत्वाच्च, प्रत्यक्षादेः पूर्वं वाक्यस्योक्तिः। **आदि**शब्देन स्वपराभ्युपेतग्रहः। **सकल**शब्दः सावान्तरभेदपरः परेष्टमानान्तरपरो वा। **वृत्तम्**—[7] स्वरसतः स्वार्थसाधनमुपजीव्यानुविधानं च। तच्छब्देन प्रमाणपरामर्शः। **न्यायः** तर्कः। **समीचीन**त्वम्—साङ्गपञ्चकत्वम्। **मार्गः**—तत्तत्प्रतिपादकविद्यास्थानम्। यद्वा—विरुद्धजिज्ञासावारण[8]रूपोऽनुग्रहः। [9] सम्बन्धसामान्ये षष्ठी। कुतस्तर्हि मानशून्यस्योत्थानम्? इत्यत्र बाह्यमतवदित्यभिप्रायेणाह—**विकल्प** इति। **विकल्पासहत्वम्**—विकल्पमात्रे

---

१. मानतत्प्राप्य. पा (मु). २. हेतुस्साध्यभावश्च पा. (ख, घ), हेतुसाध्यभावश्च. पा. (क).

* टि—भक्त्यभावादिना सहिताभ्याम् उक्तपापवासनात दूषितशेमुषीभ्यामित्यर्थः।

३. मानतर्कादौ. पा. (मु), कर्तव्यादौ. पा. (ख, घ). ४. 'सामग्री' इति (क) कोशे न.

५. प्रकृत्यादिप्रत्ययान्त. पा. (मु). ६. यथार्ह तात्पर्य. पा. (मु).

७. स्वतः. पा. (मु). ८. रूपानु. पा. (मु).

९. 'सम्बन्धसामान्ये षष्ठी' इति (क) कोशे न.

स्पष्टदोषत्वम् । [1] वेद्यत्वावेद्यत्वादिविरुद्धगोचरत्वाभिप्रायेण विविधशब्दः । तर्केषु सारो बाह्यैरात्तः ; वेदप्रामाण्याद्यनादरेणोत्थानात् । इदं तु तद्दजीषैः कल्पितम् । स्वमतस्य सत्तर्कान्वितमानसिद्धतां बोधायनटङ्कद्रमिडादिमहत्तरपरिग्रहप्राचुर्यं च सूचयति—न्याय इति । अनादरणीयम्—आदरानर्हम् ; उन्मत्तजल्पितवत् [2] उपेक्षणीयमित्यर्थः । एतेन दृष्टापह्नोतॄणां वादानधिकारः सूच्यते । उक्तं हि वेदार्थसंग्रहे—" सर्वशून्यवादिनो ब्रह्मव्यतिरिक्त [3] वस्तुमिथ्यात्ववादिनश्च स्वपक्ष-साधकप्रमाणपारमार्थ्या [4] नभ्युपगमात् अभियुक्तैर्वादानधिकार एव [*] प्रतिपादितः—' अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ' इति " इति । तत्प्रति-क्षेपस्तु अन्वारोहेण ; शिक्षणीयान् [5] शिष्यादीन् प्रति वा ।

तथा हि—निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि ' इदं प्रमाणम् ' इति न शक्यते वक्तुम् ; सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम् । यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानु-भवादेव निरस्तः ; 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वे-षामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभा-सेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभाव-

---

१. ' अवेद्यत्व ' इति (क) कोशे न. २. उपेक्ष्यम्. पा. (मु, क, ख).
३ ' वस्तु ' इति (मु). कोशे न. ४. अनभ्युपगमेन. पा (वेदार्थसंग्रहपाठ).

टि—प्रतिपादित " इति, तथाचाहु.—" अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः " इति, इत्येव मातृकासु पाठः ; तथापि वेदार्थसग्रहतात्पर्यदीपिकाभिमतः पाठोऽत्र योजित. ।

५. विषयान् प्रति. पा. (मु)

विशेषैर्निष्कृष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न क्वचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः ; स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो [1] ह्यनेके विशेषास्सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः । वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्, स्वाभिमत [2] तद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ।

संक्षिप्तं परनिरसनं प्रपञ्चयितुमुपक्रमते—तथा हि इति । तत्र प्राप्यस्य निर्विशेषत्वं मानशून्यतया क्षिपति—निर्विशेषे इति । निर्विशेषे वस्तुनि इति विशेषणात्स्ववचनविरोधोऽप्यत्र [3] सूच्यते । तस्मिन्मानमस्तीति सामान्योक्तिरयुक्ता । अतो लोकतः स्वमत्या वा सिद्धस्य विशेषतो वक्तव्यत्वाय इदंशब्दः । परैरुच्यमाने वक्तुं शक्यत्वं कथं क्षेप्यम् ? विशेषे च निर्विशेष इव त्वयापि मानं वाच्यमित्यत्राह—सविशेष इति । कस्याप्यत्र प्रमाणीकर्तुं शक्यत्वं [4] निषिध्यते ; न तु तद्वचनमात्रम् । विशेषप्रमाणमपि न निर्विशेषविषयम् ; तत्तदाश्रयादिभिर्विशेषशब्दवाच्यत्वादिभिश्च

निर्विशेषनिष्प्रमाणकत्वम्

१. ह्यनेकविशेषा.. पा.
२. मतविधा. पा.
३. सूच्य. पा. (क, ख, घ).
४. अत्र निषिध्यते. पा. (सु).

तद्वैशिष्ट्यात्। अस्ति हि क्वचिदाश्रितैः क्वचिदाश्रयादिभिश्च भिन्नधीः। गुणादिरूपे च विशेषे स्वपरनिर्वाहकत्वं वक्ष्यत इति [1] नानवस्था। स्वतस्सिद्धे माननैरपेक्ष्यवादमनूद्य क्षिपति—**यस्तु** इति। **स्वानुभवसिद्धः** स्वप्रकाशप्रत्यक्षसिद्ध इत्यर्थः। **स्वगोष्ठीनिष्ठः** लौकिकपरीक्षकसंनिधौ दुर्वच इत्यर्थः। **समयः** परिभाषाप्राय इति भावः। सर्वहृदयाविसंवादाद्बाधानर्हत्वाभिप्रायेण **आत्मसाक्षित्वोक्तिः**। उक्तं व्यनक्ति—**इदम्** इति। अत्र पदत्रयेण विषयाश्रयस्वगतविशेषप्रदर्शनम्। **केनचित्** इति तदवान्तरविशेषप्रदर्शनार्थम्। **विशिष्टविषयत्वात्**—विशिष्टस्वरूपप्रकाशरूपत्वात्। यद्वा—अनुभवपरामर्शरूपाणां ज्ञानानां विशिष्टपूर्वानुभवगोचरत्वादित्यर्थः। तथा च 'अदर्शम्' इत्यपि स्वरसम्। **सर्व**शब्दः पुरुषान् अनुभवान्वा ब्रूते। सर्वदृष्टेऽपि युक्तिबाधं क्षिपति—**सविशेष** इति। **अनुभूयमान** इति; अत्रापि प्रकाशमान इति वा परामृश्यमान इति वार्थः। **केनचित्**—धीत्वादिना व्यतिरेकिणा। **युक्ति**शब्द इहानुमानार्थः। निश्चितदोषप्रत्यक्षसिद्धज्वालैक्यबाधकाद्व्यावृत्त्यर्थं स्वनिष्कर्षेणाभासतोक्ता। **निष्कृष्यमाण** इत्यन्तोऽनुवादः। तदैव सविशेषत्वधीसूचनाय वर्तमाननिर्देशः। यदि पक्षस्वरूपमेव हेतुः, तदा दृष्टौ साध्यसन्देहः; साधनाकाङ्क्षा च न स्यात्। न च [2] स्वयं स्वधर्मः; नापीदं स्वपरनिर्वाहस्थानम्; तस्मादन्यत्वाभिप्रायेण **सत्तातिरेकित्वोक्तिः**; स्वरूपातिरिक्तं सत्तामात्रं भासमानत्वादिकं [3] वा व्यभिचारान्न हेतुरिति भावः। अत एव **स्वासा-**

---

१. नाव्यवस्था. पा. (मु). २. अस्त्वयम्. पा. (मु).

३. वा. क, ख, घ. कोशेषु न दृश्यते.

धारणत्वमुक्तम् । तेन स्वरूपासिद्धिव्यधिकरणासिद्धिविरोधानैकान्त्यानां भ्रमसहत्वस्य साध्यसन्देहार्हधर्मिस्वरूपैक्यस्य च निरासः । सत्तातिरेकित्वादेः पक्षे युक्त्या स्थापनाय पुनर्ग्रहणम् । निष्कर्षहेतुभूतैः इति हि तत्स्थापनम् ; न हि धर्मिस्वरूपासाधारणं सत्तादिधर्ममात्रं वा सविशेषाद्व्यावृत्तिं साधयेदिति भावः । साधनकाले हेतुस्तिष्ठति, साध्यकाले तु स्वयमपि गलतीति धर्मवादवादिना त्वया न [1] वक्तुं युक्तम् । अनुभूतित्वनिवृत्तौ [2] च कथमनुभूतिस्स्यादित्यभिप्रायेण सविशेष एवावतिष्ठते—इत्युक्तम् ; अन्यथा स्वरूपासिद्धिस्स्यादित्यभिप्रायेण एवकारः । सर्वविशेषनिषेधको हेतुः स्वपरनिर्वाहकनीत्या कनकरजत [3] वत्स्वात्मनोऽपि निवर्तकः स्यादित्यत्राह—अत इति ; स्वस्मिन्निषिद्धे सविशेषत्वव्यापकाननुभूतित्वनिवृत्त्ययोगात्साधकाभावेन साध्यासिद्धिप्रसङ्गादित्यर्थः । कैश्चित्—हेतुतया प्रमितैः तत्समानयोगक्षेमैश्च । यद्येतद्धेतु [4] राहित्यमेतद्धेतुमत्त्वेन साध्यते, तदा प्रतिज्ञाहेत्वोर्विरोधश्च स्यादिति भावः । अन्ये—प्रमितिसिद्धस्वधर्मव्यतिरिक्ताः । न क्वचित् ; न हि स्वानुभवे स्वस्य निर्विशेषत्वं सिध्यति । एवं तत्परामर्शेऽनुमानादौ चेत्यर्थः । हेतुरूपस्वगतविशेषः स्थापितः ; अथ 'इदमहम्' इत्युक्तविषयाश्रयाभ्यामपि वैशिष्ट्यं स्थापयति—धिय इति । हिः प्रसिद्धौ । धीत्वम् कस्यचित्प्रकाशात्मता ; [5] स्वैः स्वस्येति विशेषतः स्वप्रकाशता । "प्रकाशश्च क्वचित्" इति वक्ष्यति । पूर्वं त्वदुक्तो हेतुस्तत्साध्यं चेत्यर्थः । "निष्कृष्टा विषयधीरेव ब्रह्म"

---

१. वक्तुम् युक्तम् पा (ख). २. 'च' इति (ख) कोशे न

३. टि—पुटे कनकेन निक्षिप्त रजतं पच्यमानं सत् कनकगतदोष विनाश्य स्वयमपि विनष्ट भवतीति धातुवादिनां प्रथा अत्रानुसन्धेया । कतकरजोनिदर्शनमिदमिति केचित् ।

४. 'राहित्यमेतद्धेतु' इति (क) कोशे न.

५. टि—स्वैरिति ज्ञानावस्थाबहुत्वाभिप्रायेण । सैव स्वेनेति. पा. (ख).

